Madras Oriental Series No. 2.

# VĪṆĀVĀSAVADATTAM










PUBLISHED IN THE JOURNAL OF ORIENTAL RESEARCH
MADRAS



Price As. 8.] [Foreign 1Sh.

श्रीः



# वीणावासवदत्तम्





ओरियण्टल् रिसर्च् त्रैमासिक-
पत्रिकायां प्रकाशितम्

मद्रास् ला जर्नल् मुद्राशालायाम्
मुद्रितम्
1931

---

[ मूल्यम् अष्टौ आणकाः ]

श्रीः




# वीणावासवदत्तम्





ओरियण्टल् रिसर्च् त्रैमासिक-
पत्रिकायां प्रकाशितम्

मद्रास् ला जर्नल् मुद्राशालायाम्
मुद्रितम्
1931

---

[ मूल्यम् अष्टौ आणकाः ]

## FOREWORD

This work is based on a single manuscript deposited in the Government Oriental Manuscripts Library, Madras and described under R. No. 2784. It is an incomplete anonymous play breaking off at the beginning of the fourth Act. *Vīṇāvāsavadatta* is reported to be the name by which the work is known to the owner of the manuscript as may be gathered from a card tagged on to the original manuscript. It is closely similar in plot, style and spirit to the *Pratijñā-Yaugandharāyaṇa* which was published in the Trivandrum Sanskrit Series and ascribed to Bhāsa. As pointed out at page 20 of the introduction to the *Āścaryacūḍāmaṇi*, published in 1926 by the Śrī Bālamanoramā Press, Mylapore, it would not be an unreasonable guess that this play may be identical with the *Unmādavāsavadatta* of Śaktibhadra mentioned in the prologue to his *Cūḍāmaṇi*.

The Bhāsa hypothesis, regarding the thirteen plays published in the Trivandrum Sanskrit Series, is still open to much doubt. In the present state of our knowledge, the verdict regarding these plays " cannot as yet be any other than *not proven* ", as Professor Macdonell observed in his *India's Past* (page 106), in 1927. It is expected that the fragment now published as a supplement to the Journal of Oriental Research, Madras, will be helpful in solving some of the difficulties of the Bhāsa problem.

The press-copy of the manuscript of this work was prepared by Dr. C. Kunhan Raja M.A., D. Phil., Mr. T. R. Chintamani M.A., of the Oriental Research Institute of the Madras University, and Mr. T. Chandrasekharan, M.A., Manager and correspondent of the Journal of Oriental Research, Madras. The work was finally edited by me, after conjecturally filling up the gaps in some places and emending the text of the manuscript in others. Such

cases are enclosed in brackets and indicated by a mark of query. In re-making this publication from Royal to Demy size, a few mistakes have crept in. They have been corrected in the Errata which will be found at the end of the book.

S. KUPPUSWAMI SASTRI.

श्रीः

# वीणावासवदत्तं[1] नाम नाटकम् ।

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)[2]



सूत्रधारः—जयति गिरिसुतास्तनावमर्दप्रविरलभस्मविराजिपीनवक्षाः ।
स्वशरहुतवहे हुतासुरश्रीः पितृवनरङ्गमहानटस्त्रिनेत्रः ॥ १ ॥

(परिक्रम्य नेपथ्याभिमुखमवलोक्य)

आर्ये ! इतस्तावत् ।

(प्रविश्य)

नटी—[१]अय्य ! इअं ह्मि ।

सूत्र—आर्ये ! त्वद्गीतप्रसादिते रङ्गे किञ्चिन्नाटकमारब्धुमिच्छामि[3] ।

नटी—[२]असमत्था विअ अहं अज्ज गाइदुम् ।

सूत्र—किन्तु खलु कारणम् ? (विचिन्त्य) आः ज्ञातम् । कन्याप्रदानं प्रति मामनादरं मन्यसे ।

नटी—[३]दिट्ठिआ दाणिं वि सुमरिदम् ।

सूत्र—आर्ये ! अलमतित्वरया । कुतः—

---

१. आर्य ! इयमस्मि ।
२. असमर्थेवाहमद्य गातुम् ।
३. दिष्ट्येदानीमपि स्मृतम् ।

---

1. There is nothing in the body of the manuscript to warrant this title. This is the name by which the work is known to the owner of the ms. There was a card tagged on to the ms. with this name.

2. This is one of the so-called "Bhāsa-features".

3. Cf. Pratijñāyaugandharāyaṇa' तव गीतप्रसादिते रङ्गे वयमपि प्रकरणमारभामहे. The names of the author and of the work are not given

विवाहो जन्म मरणं यत्र येन यदा भवेत् ।
तत्र तेन तदैवैतज्जायते किल नान्यथा ॥ २ ॥

नटी—[१]अलं एरिसेण उत्तरेण । सम्पत्तजोव्वणा सा दारिआ । बहुआ पत्थयन्तो । अणुरूवेसु कुलेसु कण्णाणं विवाहो कादव्वो ।

सूत्र—यद्येवं व्रतनियमोपवासैर्भगवन्तं महेश्वरमाराध्य तदभिप्रेताय दास्यामि । कुतः-

नृपमौलितलस्थाङ्घ्रो जिष्णुरक्षौहिणीपतिः ।
[व्रतादि][1]तावत्प्रद्योतः कर्तुमारब्धवान् यथा ॥ ३ ॥

(निष्क्रान्तौ)

स्थापना[2] ॥

(ततः प्रविशति शालङ्कायनो वसुवर्मा च)

शाल—वसुवर्मन्! सर्वेष्वपत्येषु वासवदत्तां प्रत्यतिस्नेहता[3] महाराजस्य । कुतः-

[4] तामश्मकेश्वरसुतस्य सुनिश्चितोऽपि[5]
दातुं पुनः प्रबलहार्दतया निवृत्य ।
दास्यामि यद्यनुमतं भगवान् प्रदद्यात्
तत्रेति शम्भुमभिराधयितुं प्रवृत्तः ॥ ४ ॥

वसु—कथमिव तस्यामतिरेकस्नेहो[6] महाराजो न स्यात् । सा हि—

सौभाग्यश्रीविनयमधुरालापचातुर्यलज्जा-
लीलादीनां परमवनिताभूषणानां गुणानाम् ।
मञ्जूषेव क्षितिपवृषभे साध्विमां पालयेति
न्यस्तान्यत्र व्ययबहुलतां नेच्छता भूतधात्रा ॥ ५ ॥

---

१. अलमीदृशेनोत्तरेण । सम्प्राप्तयौवना सा दारिका । बहवस्तां प्रार्थयमानाः । अनुरूपेषु कुलेषु कन्यकानां विवाहः कर्तव्यः ।

---

1. Three syllables are missing. To fit into the metre there must be ⏓—⏑. I suggest व्रतादि ।

2. This is another "Bhāsa-feature."

3. अतिस्निग्धता or स्नेहातिरेकः is more idomatic.

4. cf. Pra. अतिलोभाद्वरगुणानामतिस्नेहाच्च वासवदत्तायां न शक्नोमि निश्चयं गन्तुम् ।

5. This incident is not seen in Pra.

6. स्नेहातिरेको महाराजस्य will be happier.

**शाल**—भोः ! कथाप्रसङ्गादविदितान्तरालमार्गाः प्रविष्टास्स्मश्चित्रमण्डपम् ।

(उभौ परिक्रम्य तिष्ठतः)

(प्रविश्य)

**प्रतीहारी**—[1] (सहर्षम्) अह्मो भट्टिणो [1]इस्सिविणदस्सणप्पवुत्तपीदिप्पवाहभरिददाए तुवरन्ती वि अहं ण पारेमि सिग्घं गन्तुम् । (इति परिक्रम्य) अम्मो अमच्चो अय्य सालङ्कायणो वसुवम्मा अ । भोदु । पिअं णिवेदइस्सम् । (उपेत्य) सुहं अय्याणम् । भट्टिणो अभिप्पेदसिविणदस्सणेण वड्ढावीअदु [न्तु] ।

**उभौ**—एवंरूपाणां प्रियाख्यानशतानां निवेदिकैव भवतु भवती ।

**शाल**—भवति ! कुत्र खलु वर्तते महाराजः ?

**प्रती**—[2]सुणादु अय्यो सव्वम् । णियमगिहादो णिग्गच्छिअ भट्टा ह्लाणगिहं पविसिअ सोव्वण्णपदुमपीठमज्झगओ रदणसिरीससिद्धत्थकुसुमगब्भेहिं मन्तपूदविमलसीदलसुरभिसलिलसम्पुण्णेहिं मङ्गलकलसेहिं ह्लाइअ किद-मङ्गलसोत्थिविहाणो अहदक्खो मणिवसणो हुदग्गिहोत्तो पुव्वोत्तरदिसाभाए कणअभद्दपीठे पुव्वमुहसुपविसिअ अह्माणत्तसमुदीरिदेसु मङ्गलपटहतुङ्गेसु [य्येसु] पुरोहिदप्पमुहाणं बहुणं रदणपुण्णपाणीणं हेमासणगदाणं जहदिट्ठं सिविणं णिवेदिअ तेहिं सव्वेहिं पसादुप्फुल्लवदणेहिं साहु साहु सफलो

---

१. अहो ! भर्तुः स्वप्नदर्शनप्रवृत्तप्रीतिप्रवाहभरिततया त्वरमाणाप्यहं न पारयामि शीघ्रं गन्तुम् । अहो ! अमात्य आर्यशालङ्कायनो वसुवर्मा च । भवतु । प्रियं निवेदयिष्यामि । अपि सुखमार्याणाम् । भर्तुरभिप्रेतस्वप्नदर्शनेन वर्धापयन्तु ।

२. शृणोत्वार्यः सर्वम् । नियमगृहान्निर्गत्य भर्ता स्नानगृहं प्रविश्य सौवर्णपद्मपीठमध्यगतो रत्नशिरीषसिद्धार्थकुसुमगर्भैर्मन्त्रपूतविमलशीतलसुरभिसलिलसम्पूर्णैर्मङ्गलकलशैः स्नात्वा कृतमङ्गल-स्वस्तिविविधानोऽहतक्षौमनिवसनो हुताग्निहोत्रः पूर्वोत्तरदिशाभागे कनकभद्रपीठे पूर्वमुखमुपविश्य अस्मदाज्ञप्तसमुदीरितेषु मङ्गलपटहतुङ्गेषु [तूर्येषु]पुरोहितप्रमुखाणां बहूनां रत्नपूर्णपाणीनां हेमासन-गतानां यथादृष्टं स्वप्नं निवेद्य तैः सर्वैः प्रसादोत्फुल्लवदनैः साधु साधु सफल इति पुनः पुनः प्रशंसितस्वप्नो विसर्ज्य तं यथानुरूपं द्विजातिगणमार्येण भरतरोहकेण सह कनकप्रासादत अवतरति ।

---

1. सिविण?

त्ति पुणो पुणो पसंसिअसिविणो विसज्जिअ तं जहाणुरूवं दुजादिज अय्येण भरदरोहएण सह कणअप्पासादादो ओदरइ ।

शाल—विजयाय ।

वसु—कुत्र पुनस्त्वं प्रस्थितासि ?

प्रती—[1]सव्वेसु देवाअदणेसु सविसेसा अज्ज पूआ कादव्वत्ति कंचुईअस्स भवरादस्स णिवेदेदुम् ।

शाल—साधु, युक्तमेतत् । गम्यताम् ।

प्रती—[2]अहं खु भट्टिणो आणात्तिं अणुचिट्ठिस्सम् ।

(निष्क्रान्ता)

शाल—(विलोक्य) अये! अयं महाराजः ।

सितरुचिरदुकूलो निर्गतः खेलगामी
नरपतिरुपवासक्लान्तदेहो विमानात् ।
कनकगिरिगुहान्ताद्गन्धहस्तीव गौरः
प्रचुरमदविसर्गात्किञ्चन क्षामगात्रः ॥ ६ ॥

(ततः प्रविशति राजा भरतरोहकश्च)

राजा—सखे भरतरोहक ! मया सुखमिति वासवदत्तां दातुमेष संश्रितो मार्गः । वरप्रदानादपि दुःखे पुनर्मामभियोजितवान् भगवान् भवः ।

भरत—स्वामिन्! शम्भोः प्रसादात्तदकृच्छ्रेणैव सिध्यति ।

राजा—तथास्तु ।

भरत—देव! उपवासश्रान्ततया न युक्तमिह चिरं स्थातुम् ।

(राजा आसनमारोहति)

शालङ्कायनवसुवर्माणौ—विजयतां देवः ।

---

१. सर्वेषु देवायतनेषु सविशेषाद्य पूजा कर्तव्येति काञ्चुकीयस्य भवरातस्य निवेदयितुम् ।
२. अहं खलु भर्तुराज्ञप्तिमनुष्ठास्यामि ।

शाल—अभिप्रेततमो महाराजेनाद्य स्वप्नो दृष्ट इति सकलं राजकुलं प्रीतिविशेषादस्वतन्त्रमिव ।



र्देवपूजया दिवसं नीत्वा प्राप्तायां

स्मितवज्जटाकिरीटम् ।

विलेपनावदातम् ॥ ७ ॥

प्रणम्य गगनतलमभ्युच्छ्रिता-

तगम्भीरेण मनश्श्रुतिह्लादिना

न ध्वानिना प्रबुद्धः ।

या विक्रान्तः कुलीनो नयविनयपरः सर्वविद्याकलाज्ञो
दाताव्याधिः कृतास्त्रो व्यसनविमुखधीर्निर्विकारो विपत्सु ।
मृत्योर्निर्भीश्चिरायुर्मृदुरतिसुभगो दीप्तिमान्प्राज्ञमन्त्री
कन्या नीताप्यकामं भवति सुखयशोभागिनी तादृशेन ॥ ८ ॥

शाल—चन्द्रिकास्थितिरिवेदं संवरणम् ।

शाल—अभिप्रेततमो महाराजेनाद्य स्वप्नो दृष्ट इति सकलं राजकुलं प्रीतिविशेषादस्वतन्त्रमिव ।

राजा—नन्वार्यस्तं श्रोतुकामः ?

शाल—यदि देवस्यायासो न स्यात् ।

राजा—तत्सम्प्रधारणार्थमेव नन्विहागता वयम् ।

शाल—अनुगृहीतोऽस्मि ।

राजा—यः खल्वहं यथाविधानं व्रतनियमोपवासैर्देवपूजया दिवसं नीत्वा प्राप्तायां रजन्यां निद्रावशमुपगतवानस्मि ।

शाल—ततस्ततः ।

राजा—ततः—

प्रविलम्बभुजङ्गभोगहारं शशिलेखास्मितवज्जटाकिरीटम् ।
भगवन्तमुपेतमभ्यपश्यं गिरिशं भस्मविलेपनावदातम् ॥ ७ ॥

शाल—अहो ! दैवसिद्धिः । ततस्ततः ।

राजा—ततस्तद्दर्शनात्समुदीर्णहर्षस्त्वरिततरमुत्थाय प्रणम्य गगनतलमभ्युच्छ्रिताञ्जलिरहमतिष्ठम् ।

शाल—ततस्ततः ।

राजा—ततस्स भगवान् सजलजलदमन्द्रस्तनितगम्भीरेण मनश्श्रुतिह्लादिना स्वरेणैकं श्लोकमुक्त्वान्तर्हितः । अहमपि तेन ध्वानिना प्रबुद्धः ।

शाल—किं देवस्य स्मृतिपथमपि प्राप्तः स श्लोकः ?

राजा—श्रूयताम् ।

यो विक्रान्तः कुलीनो नयविनयपरः सर्वविद्याकलाज्ञो
दाताव्याधिः कृतास्त्रो व्यसनविमुखधीर्निर्विकारो विपत्सु ।
मृत्योर्निर्भीश्चिरायुर्मृदुरतिसुभगो दीप्तिमान्प्राज्ञमन्त्री
कन्या नीताप्यकामं भवति सुखयशोभागिनी तादृशेन ॥ ८ ॥

—चन्द्रिकास्थितिरिवेदं संवरणम् ।

राजा—सखे भरतरोहक ! येऽस्माभिस्सम्बन्धकामाः को नु खलु तेषु सर्वैर्गुणैर्युक्तः ?

भरत—दूषिता इव ते सर्वे भगवता शर्वेण ।[1]

राजा—कथमिव ?

भरत—अश्मकराजसूनुः सञ्जयो रुधिरोद्गारी पानप्रसक्तश्च । माधुरो राजा जयवर्मा मूर्खः । काशीपतिर्विष्णुसेनो मृगयाक्षप्रसङ्गी ।

राजा—

एभिर्गुणैर्विरचितः पुरुषोऽस्त्यवश्यं
यूयं गवेषयत बुद्धिविलोचनैस्तम् ।
तादृग्विधो भुवि न चेत्स्वयमभ्युपेत्य
ब्रूयात्स्वयं[2] स भगवान्वृषराजकेतुः ॥ ९ ॥

वसु—सदृशमुक्तं प्रज्ञातिशयस्य ।

भरत—मागधो राजा दर्शकः क्रूरः । अङ्गेश्वरो जवरथो विरूपः । मत्स्याधिपतिः शतमन्युर्मत्सरी । सिन्धुराजः सुबाहुर्भीरुः ।

राजा—किं त्वमसि वक्तुकाम इव ?

वसु—उपलक्षित इव मया शङ्करानुमतो वरः ।

राजा—कथयतु भवान्, कथयतु ।

वसु—त्रासः पुनर्मां वारयति ।

राजा—मन्त्रो ननु वर्तते ।

वसु—एवं मन्ये—

विचित्य वत्सेश्वरकल्पवृक्षादम्लानशोभं गुणरत्नपुष्पम् ।
श्लोकस्रगेषा ग्रथितेव यत्नाद्धीहेमसूत्रेण महेश्वरेण ॥ १० ॥

शाल—सम्यगुपलक्षितं वसुवर्मणा ।

राजा—यद्यसौ सर्वगुणसम्पन्नस्तथाप्यहं नोत्सहे स्वां दुहितरं तस्मै दातुम्[3] ।

---

1. cf. Pra. महासेनं वर्जयित्वा न हीदानीमेते गुणाः क्वचिदेकस्था दृश्यन्ते ।

2. कथम् Supported by Vatsarāja-prabandha also.

3. cf Pra. दुहितुः प्रदानकाले दुःखशीला हि मातरः।तस्माद्देवी तावदाहूयताम् । In this drama, he does not consult the queen at all.

**भरत**—किन्तु खलु कारणम् ?

**राजा**—[1]स हि—

कुलबलमतिरूपविक्रमश्रुतिसचिवास्त्रविशेषगर्वतः ।
न गणयति नरेश्वरान् क्षितौ[2] मृगपतिपोत इव द्विपेश्वरान् ॥ ११ ॥

**भरत**—यद्येवं तमिह बध्वानीय सर्वेषां मद्व्याधीनां चिकित्सा कर्तव्या ।

**राजा**—सखे ! किं तच्छक्यमिव ?

**भरत**—देवपादानामाज्ञामात्रापेक्षिण्यो ननु सर्वाः कार्यसिद्धयः ।

**शाल**—येन वयं सम्बन्धार्थिनस्तद्बन्धने को गुणः ?

**भरत**—साक्षात्कृत्य वरस्य गुणागुणयोर्निश्चयः कर्तव्यः, न लोकरवतः[3] ।

**शाल**—किं स्वराज्यस्थ एव न शक्यः परीक्षितुम् ।

**भरत**—आपन्नाम—

नयक्षमाधृतिमतिशौर्यविक्रम-
प्रवीणताश्रुतबलवीर्यसम्पदः ।
स्वबान्धवप्रणयिजनांश्च देहिनां
परीक्षितुं निकषशिलेव निर्मिता ॥ १२ ॥

**शाल**—यदि तस्य तथा गृह्यमाणस्यानिष्टं किञ्चित् स्यात् ।

**भरत**—तत्र तस्य वरगुणहीनतापरिव्यक्तिः शत्रुवधात्स्वामिनस्तेजोवृद्धिर्दर्शकस्य च पक्षाघातः।

**शाल**—परीक्ष्यमाणस्सर्वैर्गुणैरसमन्वितो भवेत्ततः किम् ?

**भरत**—कीर्तिविशेषो लाभश्च ।

---

1. cf. भामह 4. 40

2. cf. Pra. न च मम परितोषो यन्न मां वत्सराजः प्रणमति गुणशाली कुञ्जरज्ञानदृप्तः ॥ and महासेनशब्दमपि न गणयति । किं सम्बन्धमभिलषति and उत्सेकयत्येनं प्रकाशराजर्षिनामधेयो वेदाक्षरसमवायप्रविष्टो भारतो वंशः ।...दर्पयत्येनं दायाद्यागतो गान्धर्वो वेदः विभ्रमयत्येनं वयस्सहजं रूपम् । विस्रंभयत्येनं कथमप्युत्पन्नोऽस्य पौरानुरागः ।

3. लोकमुखतः ?

वसु—कथं लाभः?

भरत—स खलु गान्धर्वे हस्तिशिक्षायामस्त्रसम्पदि चैकवीर इति लोके गण्यते।

यथाक्रमेण तत्तस्माच्छिष्यन्ते च नृपात्मजाः।
दुष्टान् सर्वांश्च विधिवद्दमयिष्यति च द्विपान्॥ १३॥

शाल—वत्सराजभयान्ननु पाञ्चालोऽस्माननुवर्तते?

भरत—अथ किम्।

शाल—गृहीते तत्र भवति कौशाम्बीं प्रतिपत्स्यते सः। तद्वृद्धिरपि नोपेक्षितव्या।

भरत—वत्सराजमोक्षभयात् द्विगुणं सर्वप्रदानैरारुणिरनुदिनमस्माकं महाराजं आराधयिष्यति। अपि च—

अनिर्जितात्मा स्वविधेयबुद्धिः प्रचण्डदण्डो निकृतिप्रधानः।
नाशो भवेत्तस्य विभूतिवृद्ध्या लताभिवृद्ध्येव महीरुहस्य॥ १४॥

राजा—यदि तस्य परीक्ष्यमाणस्य लोकविख्याता गुणविभूतिरविसंवादिनी स्यात् किमस्माभिः कार्यम्?

भरत—स नो महेश्वरानुमतो वरः।

राजा—सञ्जयाय दास्यामीति शुल्कं प्रतिगृह्य तस्मै न दत्तवानिति नन्वस्माकमयशः?

भरत—यथा वाच्यं दोषं[वाच्यदोषो]न भवति तथोपायं करिष्यामः।

राजा—कथमिव?

भरत—स्वयमेव नेष्यति।

राजा—ततोऽपि ननु पापकरम्।

भरत—तथापि दैवादुपपन्नमिव दृश्यते।

राजा—कथमिव?

भरत—यथाप्रतिज्ञादाने त्रयो दोषाः।

राजा—के ते?

भरत—शम्भोरभिप्रायव्यतिक्रमः, कोशक्षयः, राजपुत्र्या दुःखभागिता च।

राजा—कथं कोशक्षयः ?

भरत—शुल्कात् द्विगुणं त्रिगुणं वा ननु तस्मै देयम् ।

राजा—धिगतिकार्पण्यमभिहितम् ।

भरत—देव ! कार्येषु गुरुलाघवं नन्वत्र चिन्त्यते ।

राजा—ततस्ततः ।

भरत—वत्सराजः [जस्य] स्वयं प्रदाने सञ्जये प्रीतिविश्लेषो[पे]ऽपि संवादिता जातिकीर्त्तिश्च [जातिः कीर्तिश्च] ।[1]

राजा—नन्वत्रापि विद्यते कोशक्षयः ।

भरत—आरुणिरस्मत्कटाक्षसाध्यः तस्मात्स्वराज्यप्रदानादेव सत्कृतो भविष्यति ।

शाल—युक्तमभिहितं भवता ।

भरत—प्रसह्य हरणे केवलं प्रमादिताख्यातिः । किमेतत्स्वयंभरम् [स्वयंप्रदानाद्वरम्] सदोषेषु कार्येषु यदल्पदोषं तत्प्रारब्धव्यम् ।[2]

वसु—स्वामिन् ! तत्राप्यहं वाच्यदोषं न पश्यामि । कुतः—

नीता बलात्प्रकृतिभद्रतरा सुभद्रा
यद्वा सुभद्रभगिनी कपिकेतनेन ।
देवस्य तेन समभूद्वचनीयता किं
तेजःप्रकाशयशसां यदुदन्तिनां वा ॥ १५ ॥

शाल—साधु निरुक्तमभिहितं वसुवर्मणा ।

भरत—देवस्यापि स एव विधिरिष्ट इव दृश्यते ।

राजा—कथमिव ?

---

1 The passage is not at all clear. The text is very much mutilated It may be वत्सराजस्य संप्रदाने संजयप्रीतिविश्लेषेऽपि...

2. This may well be broken up as. राजा—प्रसह्य हरणे केवलं प्रमादिताख्यातिः । किमेतत्स्वयं प्रदानाद्वरम् । भर—सदोषेषु कार्येषु यदल्पदोषं प्रारब्धव्यम् ।

भरत—तद्विधिप्रधानो हि श्लोकार्थः ।[1]

राजा—स्यादेतत् ।

शाल—भो! अस्ति पुनरुपायो वत्सराजं गृहीतुम्?[2]

भर—आर्य विद्यते ।

शाल—कः खलु?

भर—स किल—

बाल्ये गजोऽस्मीति नरेन्द्रमार्गे क्रीडन्सहायैः सह हर्षमत्तैः ।
अङ्गारकं नाम मुनिं प्रयान्तं मुहुर्मुहुः पांसुभिरभ्यषिञ्चत्[3] ॥ १६ ॥

शाल—ततस्ततः ।

भरत—ततस्तेन महर्षिणा समुपजातामर्षेण हस्तिहेतोरेव बन्धनं शत्रुवशतां च यास्यतीति स तु शप्तः ।

राजा—अहो! नृशंसता महर्षेः ।

शाल—कथं त्वयैतदुपलब्धम्?

भरत—अदूरस्थेनाऽस्मदीयेन चारेणैव तच्छ्रुतम् ।

राजा—यद्येवं गृहीत एव वत्सराजः ।

शाल—भोः! कथमिदानीं प्रारब्धव्यम्?

भरत—स खल्विदानीं हस्तिबन्धनप्रियः । अतः—

आकृष्य द्विरदेन शिक्षितवता वन्यद्विपानां परां
लीलां कृत्रिमवर्णलक्षणवता मन्देन भद्रश्रिया ।
शूरैः कक्षगतैरतीव बहुभिः स्निग्धायुधीयैर्बलै-
रशक्यश्शक्र इवर्षिशापविवशो युद्धे ग्रहीतुं बलात् ॥

1. cf. कन्या नीताप्यकामम् ।
2. This is not a motive fore capturing Udayana in Pr.
3. This is in conflict with Bṛhatkathāślokasaṅgraha and Bṛhatkathāmañjari, according to which Udayana was brought up in a hermitage.

वसु—अहो! सुनिपुणो ग्रहणोपायः।

शाल—मन्दहस्तिनियमः किम्?

भरत—कदाचित्कार्यविसंवादे परस्य वृद्धिर्मा भूदिति।

राजा—किमस्ति पुनस्तद्योगानुरूपो हस्ती?

भरत—देव! अस्यैव कार्यस्य हेतोर्गूढं सुपरिकल्पिताश्चत्वारो हस्तिनः।

राजा—को नु खलु तत्र यास्यति?

भरत—आर्यशालङ्कायनः।

राजा—किं तच्छक्यमिव?

शाल—अवन्ध्यफला हि देवस्याभिप्रायाः।

राज—कदा नु खल्वार्येण तत्र गन्तव्यम्?

भरत—यदा स राजा हस्तिवनं प्रविष्टवान्।

राजा—कथं पुनस्तज्ज्ञास्यामः?

भरत—न्यस्ता मया सर्वत्र हस्तिवनेषु वनचरपुलिन्दतापसाङ्गारिकादि-व्यञ्जनाश्चाराः। कौशाम्ब्यां च तत्वा[द]नुरूपत[पा]स्तेभ्यो यथावृत्त[त्तं] कालहीनं मया उपलभ्यते।

राजा—सखे! किं त्वया पूर्वमेव व्यवसितं वत्सराजग्रहणम्?

भरत—न हि।

राजा—कथं पुनरेतत्सर्वं सुविनिहितम्?

भरत—सर्वेषां आज्ञा[राज्ञां]छिद्रमुपलभ्य छिद्रानुरूपो विधिः प्रागेव मया क्रियते, स्वामिनः पश्चादाज्ञासमकालमेवाभिप्रायसिद्धये।

राजा—सदृशमेव[वै]तदाबाल[ल्य]वृद्धस्नेहपुरस्सरस्य प्रज्ञातिशयस्य।

(प्रविश्य)

यतीहारी—'जेदु भट्टा। कालो दाणिं अत्थाणीए। (?)

भरत—देव! परिसमाप्तो ननु मन्त्रः?[1]

राजा—तथास्तु।

(सर्वे उत्थाय परिक्रामन्ति)

राजा—भोः

मम तावदिदं दुःखं नित्यं दुहितृहेतुतः।
बह्वयो दुहितरो येषां कुर्वते किन्नु नाम ते॥

(निष्क्रान्ताः सर्वे)

## इति प्रथमोऽङ्कः

---

१. जयतु भर्ता। काल इदानीं स्नानाय (?) उत्थानाय (?)

---

1. The corresponding portion in the Pratiñāyaugandharāyaṇa is known as मन्त्रालोचनाङ्कम्।

# ॥ द्वितीयोऽङ्कः ॥

(ततः प्रविशति तापसव्यञ्जनश्चारः)

**चारः**—[1]जदा वेणुवणं पविट्ठो वच्छराओ तदेव मए पेसिदो कवोदको । किं संपत्तो बु[खु]सो उज्जयिणीम् । (परिक्रम्य) किं णु हु सुक्कपण्णमम्मरसद्दो विअ । (विलोक्य) अए! आउहीओ ।

(प्रविश्य)

**भटः**—[2]भअवं! पाणीअं व, भअवं! पाणीअं व ।

**चारः**—[3]भद्द ! करअत्थं विणा णत्थि अण्णम् ।

**भटः**—[4]तं एव्व परमपवित्तम् ।

**चारः**—[5]तह होदु ।

**भटः**—(अञ्जलिना पानीयं पीत्वा) [6]अज्ज जीवाविदह्मि भअवदा ।

**चारः**—[7]भद्द ! अदिसीअला इअं वेला । किं णु हु तुए अदिमत्तं पाणीअं पीदम् ?

**भटः**—[8]भअवं ! भट्टा वच्छराओ सिलिन्ध्रअसण्डे णाअवणे रण्णवारिप्पविट्ठं महंतं हत्थिजूहं उवलंभिअ अदीव तुरिदं आआदो ।

---

१. यदा वेणुवनं प्रविष्टो वत्सराजस्तदैव मया प्रेषितः कपोतकः । किं सम्प्राप्तः खलु स उज्जयिनीम् । किन्तु खलु शुष्कपर्णमर्मरशब्द इव । अये ! आयुधीयः ।
२. भगवन् ! पानीयं वा, भगवन् ! पानीयं वा ।
३. भद्र ! करकस्थं विना नास्त्यन्यत् ।
४. तदेव परमपवित्रम् ।
५. तथा भवतु ।
६. अद्य जीवितोऽस्मि भगवता ।
७. भद्र ! अतिशीतलेयं वेला । किन्तु खलु त्वयातिमात्रं पानीयं पीतम् ।
८. भगवन् ! भर्ता वत्सराजः शिलीध्रकषण्डे नागवने अरण्यवारिप्रविष्टं महान्तं हस्तियूथमुपलभ्यातीव त्वरितमायातः ।

चारः—(आत्मगतम्)[१]एव्वं एदम् । पुच्छिस्सं दाव णम् । (प्रकाशम्) भो! किण्णिमित्तं स राआ अप्पेण बलेण परिब्भमदि ?

भटः—[२]किं अप्पबलम्? दुवे सहस्सा वदाभि (पदादओ)?; दी सद मत्ता तुरआ; विसंदि[विंसदि] मत्तवारणा ।

चारः—[३]किं जोअंधराअणो मोण्डो[रुमण्णो] अ अग्गदो गदो, आदु पिट्ठदो आअच्छदि ?

भटः—[४]अय्यजोअंधराअणो पुण रक्खाए णिउत्तो ; अय्यो उण रुमण्णो खुलिन्दखोहं उवसमीदुं पड्ढवणं (?) पविट्ठो ।

चारः—(आत्मगतम्) [५]भो! जस्स लहेण [जह लेहण] उत्तं तह एव्व सव्वं।
भटः —[६]भअवं! वंदामि । गच्छामि[गच्छम्मि] अहम् ।
चारः—[७]सोत्थि ।

(निष्क्रान्तो भटः)

चारः—[८]किं णु हु दाणीं कत्तव्वं । पविट्ठो वच्छराओ सिलिद्धअसण्डं णाअवणम्। कोच्चि[व्वि] उज्जइणीओ आअच्छदि । (एकतो विलोक्य) दिट्ठिआ एसो कवोदओ इदो एव्व आअच्छदि ।

---

१. एवमेतत् । पृच्छामि तावदेनम् । भोः ! किन्निमित्तं स राजाल्पेन बलेन परिभ्रमति
२. किमल्पबलम् ? द्वे सहस्रे पदातयः, द्विशतं मत्तास्तुरागाः, विंशतिमत्तवारणाः ।
३. किं यौगन्धरायणो रुमण्वांश्चाग्रतो गतौ, उत पृष्ठत आगच्छतः ?
४. आर्ययौगन्धरायणः पुना राक्षायै नियुक्तः । आर्यः पुना रुमण्वान्पुलिन्द-क्षोभमुपशमयितुं प्रस्थवनं (?) प्रविष्टः ।
५. भो यथा लेखेनोक्तं तथैव सर्वम् ।
६. भगवन् ! वन्दे । गच्छाम्यहम् ।
७. स्वस्ति ।
८. किन्नु खल्विदानीं कर्तव्यम् । प्रविष्टो वत्सराजः शिलीध्रकषण्डं नागवनम् । कोऽप्युज्जयिनीत आगच्छति । दिष्ट्यैष कपोतक इत एवागच्छति ।

(प्रविश्य)

**पुलिन्दवेषश्चारः**— [१]भो! सुट्ठु खु एदं पुच्छदि । णिक्कम्मसीळाणं तपो त्ति एत्थ तुवं चिट्ठसि । अहं पुण तदुवाअणाली विअ दोतपो [आदवे] परिब्भमामि ।

**प्रथमः**— [२]भो! मचंथिअ! किं तुवं णअरं आअच्छ (?) एव्व णिवुत्तो, ण खु वा ।

**नितीयः**— [३]भो ! मए गच्छंतेण मग्ग एव्व अय्यो साळंकाअणो दिट्ठो ।

**प्रथमः**— [४]कहं तेण विण्णादं वच्छराओ सिलिद्धअसण्डं पविट्ठो त्ति ?

**द्वितीयः**— [५]णअरत्थेहिं चारेहिम् ।

**प्रथमः**— [६]जुज्जइ । तदो तदो । सो दाणीं कहिं ?

**द्वितीयः**— [७]अय्यो साळंकाअणो तहिं तहिं चौरग्गछं[1] जहाणुरूवं ठाविअ चउस्सदेहि पदादीहि सबरराअं [अ]णिद्दिसिअमाणमग्गो णीळहत्थि[त्थिम्] गह्णिअ जमुणाकओच्छ साळवणं पविसिअ णिऊढं उपविट्ठो ।

**प्रथमः**— [८]तदो तदो ।

---

१. भो ! सुष्ठु खल्विदं पृच्छामि । निष्कर्मशीलानां तप इत्यत्र त्वं तिष्ठसि । अहं पुनस्तन्तुवायनालीवातपे परिभ्रमामि ।
२. भो ! मत्सन्धीय ! किं त्वं नगरमगत्वैव निवृत्तः, न खलु वा ।
३. भो ! मया गच्छता मार्ग एवार्यः शालङ्कायनो दृष्टः ।
४. कथं तेन विज्ञातं वत्सराजः शिलीध्रकषण्डं प्रविष्ट इति ?
५. नगरस्थैश्चारैः ।
६. युज्यते । ततस्ततः । स इदानीं कुत्र ?
७. आर्यशालङ्कायनस्तत्र तत्र चौरगजं (?) यथानुरूपं स्थापयित्वा चतुश्शतैः पदातिभिः शबरराजनिर्दिश्यमानमार्गो नीलहस्तिनं गृहीत्वा यमुनाकच्छे सालवनं प्रविश्य निगूढमुपविष्टः ।
८. ततस्ततः ।

---

1. चौरग्गयं चउस्सदेहिं पदादिहिं ।

द्वितीयः—[1]तदो अहं अय्येण साळंकाअणेण सेणस्स समीवं गच्छिअ वच्छराअप्पवुत्तिं जाणीहि त्ति पेसिदो ह्मि ।

प्रथमः—[2]अजुत्तं किदं तेण सेणस्स समीवं कवोदअं विसज्जंतेण ।

द्वितीयः—[3] अलं परिहासेण । को दाणिं वुत्तन्तो ?

प्रथमः—[4]विदिदम् मए एव्व सव्वम् । आअच्छ दाणिम् । तहिं गए एव्व गच्छामो ।

द्वितीयः—[5]तह ।

(निष्क्रान्तौ)

प्रवेशकः

(ततः प्रविशति राजा, विष्णुत्रातः, विदूषकश्च)

राजा—सखे ! विष्णुत्रात !

तरुभिरिभकराग्रभग्नशाखैः करिदशनोल्लिखितैर्महाद्रिकुञ्जैः ।
द्विपपदविषमैश्च भूमिभागैर्गजमयवत्प्रतिदृश्यते वनं मे ॥

विदू—[6]मम उण बुभुक्खाए ओदणमअं विअ पडिभादि ।

विष्णु—नैतदाश्चर्यम् ।

राजा—वयस्य ! किमिदानीमेव प्रारब्धा बुभुक्षा ?

विदू—[7]कुक्कुडेहिं सह पवुद्धा ।

---

१. ततोऽहमार्येण शालङ्कायनेन श्येनस्य समीपं गत्वा वत्सराजप्रवृत्तिं जानीहीति प्रेषितोऽस्मि ।
२. अयुक्तं कृत तेन श्येनस्य समीपं कपोतकं विसर्जयता ।
३. अलं परिहासेन । क इदानीं वृत्तान्तः ?
४. विदितं मयैव सर्वम् । आगच्छेदानीम् । तत्रैव गच्छावः ।
५. तथा ।
६. मम पुनर्बुभुक्षया ओदनमयमिव प्रतिभाति ।
७. कुक्कुटैस्सह प्रबुद्धा ।

(सर्वे परिक्रामन्ति)

**विष्णु**—देव! इतो विलोक्यताम् । उच्चत्वादस्य प्रदेशस्य विस्पष्टं दृश्यते वारी । एषा हि—

संभ्रम्यमाणकलभेभकरेणुपोत-
धेनूर्मिभङ्ककलिला रदभे[फे]नमाला ।
वारी विभाति विलसत्करभोगिसङ्घा
व्यालोलफेनभुजगोर्मिमतीव वापी ॥ ३ ॥

**राजा**—सम्यगाह भवान् !

उपलनिचयनीलं धीरगम्भीरघोषं
दशनशबलमेतद्भ्राजते हस्तियूथम् ।
विरलतरबलाकं तोयभारावनम्रं
नवमिव घनवृन्दं मन्दमन्द्रप्रणादम् ॥ ४ ॥

**विदू**—[1] भो! मूळकन्दा विअ दन्ता, मोदआ विअ कुम्भा, मंणआ विअ कण्णा, गुळित्ता(?) विअ णअणा, ओदणरासी विअ णआ ।

**राजा**—अतिसादृश्यमभिहितम् ।

(प्रविश्य)

**पाशिकाध्यक्षः**—[2] जेदु भट्टा! किदं सव्वासु दिसासु जहाणत्तं बलिविहाणं । हुदो अग्गी । वाइदा सोत्थी ळत्थदक्खिणेहिं बह्मणेहिम् । परिवुदा

---

१. भो ! मूलकन्दा इव दन्ताः, मोदका इव कुम्भाः, मण्डका इव कर्णाः, कुलित्था इव नयनानि, ओदनराशिरिव नासा ।

२. जयतु भर्ता ! कृतं सर्वासु दिशासु यथाज्ञप्तं बलिविधानम् । हुतोऽग्निः । वाचितं स्वस्ति लब्धदक्षिणैर्ब्राह्मणैः । परिवृता वारी । उत्थापिताः पताकाः । तव

वारी । उत्थाविदा पदाआ । तुज्झस्स घसमालले(?) दुवारसमीवे ठिदा पुरिसा उत्थिद(?)वेणुदंडपासाणंकुसपासाउह(?)समत्थेहिं सह गएहिं ओदिण्णो । पडि पादस्सा(?)चम्मकञ्चुआसाहावच्छादिदसरारिदकरेणु- वादंतरिदा(?) पादवंधीआ । पेक्खदु पेक्खहु भट्टा एदाणं कम्मविहाणम् !

राजा—गच्छतु भगवान् । यावदहमप्यागच्छामि ।

पाशि—[1] भट्ट ! तह । (इति निष्क्रान्तः)

(प्रविश्य)

वनचरवेषश्चारः— अज्ज खु जूहपदिं विअ सुसिक्खिदा करेणू वञ्चिअ[1]वच्चराअ- बन्धणं पवेसिअ भट्टिणो पज्जोजदस्स[2] अणिरिणो भविस्सम् । (परिक्रम्य) पविट्ठो ह्मि सिलिद्धअसण्डम् । कहिं णु हु वच्छराओ ? (विलोक्य) एसो सो । (उपसृत्य) जेदु भट्टा ! ण हन्त वञ्चिदो ! णीलो गजो मए दिट्ठो ।[3]

राजा—(सानन्दम्)भद्र ! नीलो गजः क्व त्वया दृष्टः ?

---

गहनालये(?) द्वारसमीपे स्थिताः पुरुषा उद्धृतवेणुदण्डपाषाणाङ्कुशपाशायुधसमर्थैः सह । गजैः अवतीर्णे पथि पातस्य (?) चर्मकञ्चुकावच्छादितशरीरकरेणुपादान्तरिताः (?) पादबन्धनीयाः (?) । प्रेक्षतां, प्रेक्षतां, भर्तेदानीं कर्मविधानम् !

१. भर्तः! तथा ।

२. अद्य खलु यूथपतिमिव सुशिक्षिता करेणुर्वञ्चयित्वा वत्सराजं बन्धनं प्रवेश्य भर्तुः प्रद्योतस्यानृणो भविष्यामि । प्रविष्टोऽस्मि शिलीध्रकषण्डम् । कुत्र नु खलु वत्सराजः ? एष सः । जयतु भर्ता ! न हन्त वञ्चितः ! नीलो गजो मया दृष्टः ।

---

1. वच्चराअं?
2. पज्योदस्स ।
3. Cf. Pr. एकनीलो हस्ती मया दृश्यते P. 9

चारः—[1]इदो जोअणमत्ते जमुणाकच्छे सालवणम् ।[1] तहिं माणलभरिआ णाम अदिमुत्तअलआ[2] ति से समीवे सो अहिरमदि ।

राजा—सखे ! विष्णुत्रात ! नीलकुवलयतनुर्नाम[3] चक्रवर्तिनो हस्ती । न शक्यः सोऽन्यैर्ग्रहीतुम् । अहं तु पुनः—

शक्तो ग्रहीतुं द्विरदप्रवीरं
तं वीणया केवलयाश्रमेण ।
विशेषतः कृत्यकरी ममैषा
विद्या गजेन्द्रेषु तथाविधेषु ॥ ५ ॥

विष्णु—ऐरावतादीनपि दिग्गजान् देवो ग्रहीतुं समर्थः । किं पुनस्तं वनगजम् ![4]

राजा—सखे ! [5]त्वमिदानीं सर्वैः साधनैर्हस्तिबन्धने प्रयतस्व । अहं पुनस्तं द्विरदवरं स्वीकृत्य शीघ्रमानयिष्ये ।

विष्णु—

सापायाः प्रत्यन्ता न च साधु परीक्षिता नदीकक्ष्या ।
तस्माद्बलैः समस्तैर्गन्तव्यं नान्यथा तत्र[6] ॥ ६ ॥

---

१. इतो योजनमात्रे यमुनाकच्छे सालवनम् । तत्र मानलभरिता नाम अतिमुक्तकलता अस्ति । अस्याः समीपे स अभिरमते ।

---

1. Cf. Pr. ...इतः क्रोशमात्रे मल्लिकासालप्रच्छादितशरीरः P. 9.

2. अत्थि ।

3. Once mentioned as कुवलयनीलतनु and again as नीलकुवलयतनु । Cf. Pr. भट्टिण उत्त-अत्थि एसो चक्कवर्त्ती हत्थी णीलकुवलयतणू णाम हत्थिसिक्खाए पठिदो P. 9.

4. Cf. Pr. भट्टा अमच्चेण विण्णाविदो—ण हु दे एलावणादीणं वि दिसागआणं गहणं ण सम्भणीअम P. 9.

5. Cf. Pr. ता अप्पमत्ता होह तुज्झे इमसिंस जूहे । गअं तं अहं वीणादुदीओ आणेमि ।

6. Cf. Pr. अविदु दुरारक्खदाए आसण्णदोसाणि विसअन्तराणि । ....... ता पदादिमात्राहि ठिदं इमं जूहं कारिअ सव्व एव्व गच्छामो ण एकाइणा सामिणा गन्तव्वम् ।

विदू— [1]सुट्ठु तत्तहोदा उत्तम् । अपरिच्छिदो णाम देसो अपरिच्छिदओदणं विअ दुःक्खमुप्पादेदि ।

राजा— वयस्य! तद्दर्शनमनियतम् । नियतप्राप्तस्य महदो हस्तियूथस्य त्यागा- दर्थहानिर्भवेत् । किमत्र विचारेण । पश्य—

दृष्टो[1] [ष्ट]भवेद्यदि स घोषवती ममैषा
संविद्यते गजवरग्रहणैकहेतुः ।
स्यादत्ययस्तमपि साधयितुं समर्था
व्यालोदरासिततलास्ति ममासियष्टिः ॥ ७ ॥

विष्णु— हस्तिबन्धनं कृत्वैव ननु गन्तव्यम् ।

राज— न युक्तः सातिशये वस्तुनि कालातिक्रमः । सामसाध्यत्वाद्गजपतेः कोपकारणं च महाबलदर्शनम् ।

विदू— [2]भो किं पुण कादव्वम् ?

राजा— सखे, विष्णुत्रात ! अहमेनं गृहीत्वा सायं सप्तपर्णवेदिकाद्वारे वासार्थ- मागमिष्यामि । त्वं तु पुनः—

क्षीणव्याधितवृद्धनिन्दितगजान् दन्ताधिकान् धेनुकान्
बालान् गर्भवतीर्विलक्षणतमाञ्श्वेतादिवर्णाधिकान् ।
प्राप्तैश्वर्यसुखांश्च वारणवरांस्त्यक्त्वा प्रशस्तान् गजान्
बद्ध्वाथ व्रज साधनैः परिवृतस्तत्रैव वस्तुं सखे ॥ ८ ॥

---

१. सुष्ठु तत्रभवता उक्तम् । अपरीक्षितो नाम देशः अपरीक्षित ओदन इव दुःखमुत्पादयति ।

२. भोः ! किं पुनः कर्तव्यम् ?

---

1. The reading in the Vinavasavadatta is दृष्टो but the Vatsarajaprabandha gives दृष्टा ।

विष्णु— यदाज्ञापयति देवः ।

चारः— [1]भट्ट ! काळादिक्कमेण अळिअवादी विअ भट्टिणो समीवे भविस्सम् ।

राजा — भद्र ! बहुशो दृष्टप्रत्ययं ननु ते वचः !

चारः— [2]अदो एव्व मए भणीयदि ।

राजा—सुन्दरपाटलस्तावत् ।

अश्वबन्धकः—(प्रविश्य) [3]भट्ट ! एसो सुन्दरपाटलो ।

राजा—आनय(इत्यश्वमारुह्य) विष्णुत्रात ! गच्छ त्वम् । कात्यायनमिश्रानग्रतः कुरु ।

विष्णु—यदाज्ञापयति देवः । कष्टं भोः !

नृपाः प्रभुत्वात्प्रतिषेधवामा
जिह्मो विधिस्तद्वशवर्ति कार्यम् ।
साचिव्यतो नापरमस्ति पुंसां
विषाददुःखायशसां निदानम् ॥

(निष्क्रान्तः)

चारः— [4]"जइ वच्छराओ ससाहणो आअच्छदि तदा तुवं पळाइअ आअच्छ" इति अय्यसाळंकायणेण । उत्तम् एसो दाणिं बलम् उज्झिअ णिग्गदो ; सव्वदा सिद्धं कज्जम् ।

राजा—घोषवती तावत् ।

---

१. भर्तः ! कालातिक्रमेण अलीकवादीव भर्तुः समीपे भविष्यामि ।
२. अतः खलु मया भण्यते ।
३. भर्तः ! एष सुन्दरपाटलः ।
४. "यदि वत्सराजः ससाधन आगच्छति तदा त्वं पलाय्य आगच्छ" इति आर्यशालङ्कायनेन उक्तम् । एष इदानीं बलमुज्झित्वा निर्गतः ; सर्वदा सिद्धं कार्यम् ।

औपगायकः—(प्रविश्य घोषवतीहस्तः)[१]जेदु भट्टा ! एसो ह्मि ।

राजा—त्वं मदनुपदमागच्छ ।

औपगा—[२]भट्ट ! तह ।

विदू—[३]भो ! एसो कच्चायणो विंसदिमत्तेण बळेण परिवुदो अग्गदो गदो । अहं दाणिं तुए एव्व सह गमिस्सम् ।

राजा—वयस्य ! शीघ्रमस्माभिर्गन्तव्यम् । अतस्त्वं विष्णुत्रातेन सह गच्छ ।

विदू—[४]भो ! तुए एव्व अहं आअच्छामि ।

राजा—वयस्य ! तिष्ठ त्वम् । मम खलु प्राणैः शापितः ।

विदू—[५]एसो ह्मि । गच्छ तुवं विअआअ ।

(निष्क्रान्तः)

चारः—[६]भट्ट ! ण दाणिं चिराइदव्वम् ।

राजा—भद्र ! त्वमग्रतो भूत्वा मार्गमादेशय ।

चारः—[७]तह । इदो इदो ।

(सर्वे परिक्रामन्ति)

राजा—अहो सुन्दरपाटलस्य जवविशेषः । इह हि—

---

१. जयतु भर्ता ! एषोऽस्मि ।
२. भर्तः ! तथा ।
३. भोः ! एष कात्यायनो विंशतिमात्रेण बलेन परिवृतो अग्रतो गतः । अहमिदानीं त्वयैव सह गमिष्यामि ।
४. भोः ! त्वयैवाहमागच्छामि ।
५. एषोऽस्मि । गच्छ त्वं विजयाय ।
६. भर्तः ! नेदानीं चिरायितव्यम् ।
७. तथा । इत इतः ।

तरुगहनमिदं नदीप्रवाहे
पतितमिवोभयपार्श्वयोर्विरूढम् ।
अभिमुखमभिधावतीव वेगा-
त्प्रमुखगतं समवेक्ष्य दूरतो माम् ॥ १० ॥

चारः—[1]पविसह्म जमुणाकच्छं । अज्ज ! दिट्ठिया चउ(त्थ)ब्भाअवशिट्ठे दिअसे संपत्तह्म (परिक्रम्य) भट्ट ! एसो खु सो वारणो अदिमुत्तअसाळच्छाआए ठिदो ।

राजा—सखे ! अयमत्र । एष हि—

समसितनखरान्तः कार्मुकाकारवंशः
सुहनुकटललाटो दीर्घपुच्छो दृढांसः ।
पृथुतरमुखकर्णो व्यायतावृत्तहस्तो
जलभरगुरुमेघश्यामपूर्वोच्छ्रिताङ्गः ॥ ११ ॥

चारः—[2](आत्मगतम्) दाणिं फुंळामि विअ । (प्रकाशम्) मुहुत्तअं तिन्दुअच्छाआए विस्समिस्सम् ।

(निष्क्रान्तः)

राजा—(अश्वादवरुह्य) भृङ्गारकस्तावत् ।

चेटः—(प्रविश्य भृङ्गारकहस्तः) [3]जेदु भट्टा ! एसो आणीदो ।

राजा—(आचम्य) औपगायक ! घोषवतीमानय ।

औपगा—[4]भट्ट ! एसा घोसवदी ।

---

१. प्रविशामो यमुनाकच्छम् । आर्य ! दिष्ट्या चतुर्थभागावशिष्टे दिवसे सम्प्राप्ताः स्मः । भर्तः ! एष खलु स वारणः अतिमुक्तकसालच्छायायां स्थितः ।

२. इदानीं फुल्लामीव । मुहूर्तं तिन्दुकच्छायायां विश्रमिष्ये ।

३. जयतु भर्ता ! एष आनीतः ।

४. भर्तः ! एषा घोषवती ।

राजा—(प्रगृह्य वीणां मूर्च्छयति)

चेटः—[1]अहं दाणिं तहिं एव्व उवविसिस्सम् ।

(निष्क्रान्तः)

राजा—(आत्मगतम्) किं नु खलु क्षीणो मे बाहुः ? वेपते मे सव्यं चक्षुः ।

औपगा—[2]हद्धि ! पडिपुय्यं (पडिमुहं ?) कण्णअरुन्ते (रुन्तुअं?) वाअसो कूजइ । बहुचोराणं आवासं खु इदं वणगहणम्; किं णु हु भवे !

(ततः प्रविशति चोरसेनापतिः खड्गहस्तश्चेटश्च)

चोरः—अहो नु खलु राज्ञां प्रभावो नाम ! वत्सराजो वनमिदं प्रविष्टवानिति श्रुतमात्रेणैव भिन्नो नः सङ्घातः ।

(उभौ परिक्रामतः)

राजा—(वीणां वादयन् गायति)

निरुपमबलवीर्यशौर्यतेजः
कुवलयनीलतनो मनोज्ञवंश ।
श्रृणु वचनमनेकपप्रबर्ह
व्रज वशतां मम भद्र भद्रमस्तु ॥ १२ ॥

(नेपथ्ये भेरीपटहशङ्खाक्रुष्टः शब्दः क्रियते)

राजा—हन्त ! वञ्चिताः स्मः नीलकुवलयतनुरप्रतिनिधिरयं हस्तीति । केनाप्यसौ मदाकर्षणार्थं नियुक्तः प्रणिधिः ।

---

१. अहमिदानीं तत्रैवोपविशामि ।

२. हा धिक् ! पडिपुय्यं (प्रतिमुखं) कर्णारुन्तुदं वायसः कूजति । बहुचोराणामावासः खलु इदं वनगहनम् । किन्नु खलु भवेत् !

**औपगा**—[1]सव्वदो परिवुदह्म । साउहेहिं मणुस्सेहिं ।

**राजा**—(औपगायकाय वीणां दत्वा, अश्वमारुह्य) असौ खलु प्रदेशस्तुरगसञ्च-रणायोग्य इव दृश्यते । तदागम्यताम् ।

(सर्वे परिक्रामन्ति)

**राजा**—भोः !

तिष्ठ प्राग्जयधन्व नागरक हे कात्यायनोपेहि मां
पृष्ठं चुन्द भजस्व सव्यमरिमन्नृक्षापसव्यं मम ।
मा गा हंसक दूरमुग्र भव मत्पार्श्वेऽत्र तिष्ठाग्निजि-
द्वेहि व्याघ्र हयः (यं?) शिवेन सहिताः शेषा भवन्त्वग्रतः ॥ १३ ॥

**अश्व**—[2]साहु जहाणत्तं सव्वे ठिदा ।

(प्रविश्य)

**शालङ्कायनः**—देव ! मा साहसं कार्षीः । परीतोऽसि महता हयगजकलिलेन प्रद्योतबलेन ।

**राजा**—आः! तस्यैव दुरात्मनः प्रयोगः खल्वसौ ।

भवतु पुनरितः प्रभृत्यहं त-
त्कुलमिह हन्मि समस्तमाकुमारम् ।
वनमिव सुसमृद्धमातृणेभ्य-
स्तरुपरिघट्टनजो हिरण्यरेताः ॥ १४ ॥

---

१. सर्वतः परिवृताः स्मः सायुधैर्मनुष्यैः ।
२. साधु, यथाज्ञप्तं सर्वे स्थिताः ।

शाल—कुशलिनमक्षतं त्वां द्रष्टुमिच्छति महासेनः ।

राजा—(आत्मगतम्) यथाक्रममारब्धाः क्रिया विद्वद्भिरनपहास्याः सफलाश्च भवन्ति । अतः सामादिनयैरिमामापदमुत्तरेयम् । (प्रकाशम्) कस्त्वम् ? किं ते गोत्रम् ?

शाल—देव ! सूर्यदत्तो नाम्ना शालङ्कायनो गोत्रेण ।

राजा—सुप्रभातमद्य यच्चिराभिलषितो भवतो दर्शनोत्सवः समासादितः । एष खल्वर्थानुबन्धोऽर्थो नाम । साधु, इहागम्यताम् ।

शाल—अग्नय इव नात्यासन्नेन नातिदूरस्थितवता ननु सुखसेव्या राजानः ।

औपगा— [1]पदीआळीव (पदिआईऽव ?) धुत्तो बह्मणो ।

राजा—आगच्छेदानीं गच्छामः । कुरुष्व तावत्त्वद्भ्रूक्षेपानुवर्तिनीं वत्सेश्वरलक्ष्मीम् । कुतः—

विन्यस्य सम्यङ्निजराज्यभारं
प्रज्ञाश्रुतिश्रीमति सूर्यदत्ते ।
स्वप्स्याम्यहं स्वस्थमनाः कदेति
या प्रार्थना साद्य मम प्रसिद्धा ॥ १५ ॥

शाल—प्रतिगृहीतो देवस्य प्रसादः । किन्तु स्वामिनो यथोद्दिष्टकारिता ननु परत्रेह च हितसुखयोर्निदानम् ।

---

१. प्रतिवादीव धूर्तो ब्राह्मणः ।

राजा—भो सूर्यदत्त! तत्रभवान् भरतरोहकस्त्वद्गुणविभूतिमसहमानश्चण्डाल इव वराहकलहे द्वयोरेकतरवधेनात्मनो वृत्तिमपेक्षमाणस्त्वां नित्यं जिघांसुरीदृशेष्वासन्नापायेषु नियुनक्ति, लकुटस्थानीयस्त्वं तस्य संवृत्तः।

शाल—महासेनस्याहं भृत्यो न भरतरोहकस्य।

राजा—आर्य! प्रद्योतस्यातिक्रूरस्य समीपचारिणो व्याघ्रसमीपचारिणो मृगस्येव नियतस्तव प्रत्यवायः। ततस्तत्र स्थानं न श्रेयस्करं भवतः। अपि च, परीक्ष्यतां तावद्भवता।

जालेन वह्निवदवार्यतरस्त्वयाहं
प्रद्योतनो (तो) ध्रुवमतस्तव मृत्युरेव!
पौरोग्रहस्तिपकनापितसूदमुख्यान्
योऽहन् कृतागसमसौ न हिनस्ति किं त्वाम्॥ १६॥

शाल—(कर्णौ पिधाय) शान्तं शान्तं पापम्। नाहं भर्तुरपवादं श्रोतुं समर्थः। अस्थाने पुनर्देवेन वाग्व्ययः क्रियते। कुतः—

अभेद्यया स्वाम्यनुरागरक्षया
सदा कृतस्वस्त्ययनं मनो मम।
अतः परेषां परुषाक्षरायुधै-
र्न भिद्यते भेदवचोमहाग्रहैः॥ १७॥

अपि च

प्रद्योतं भज मुक्त्वास्त्रं श्रेयः स्यात्ते महत्ततः।
देशकालौ हि विद्येते क्षमायास्तेजसोऽपि च॥ १८॥

राजा—हा धिक् !

क: क्षत्रियः सहजमानमयामृतस्य
श्रीमद्यशःसमुपदंशवतो रसज्ञः ।
शस्त्रं विहाय वशतां द्विषतामुपेया-
द्व्यायामकर्कशदृढायतपीनबाहुः ॥ १९ ॥

अश्व—[1]भट्ट ! आरूढो एसो हत्थिणं । सज्जो होहि ।

औप—हत्थिवक्को सखग्गभीसणं उत्तिविआमाणसजिरीरणिअरंपपुच्छसीहणादं (?) वणगच्छदोणिग्गदं सत्तुबलं परिक्खिदं च अह्माणं जोहेहि ।

राजा—भवतु भवतु ।

अहमरिपृतनानामद्य साश्वद्विपानां
धरणितलमसृग्भिस्तर्पयिष्यामि कोष्णैः ।
वृकशुनकशृगालान् काककङ्कांश्च मांसै-
र्दयिततरयुगान्तं प्राणदानैः कृतान्तम् ॥ २० ॥

(निष्क्रान्तः सार्धमौपगायकाश्वबन्धकाभ्याम्)

शाल—अहो, क्षात्रं तेजः ! अहमप्यात्मनो बलस्यो(पान्ते)र्भविष्यामि ।

---

१. भर्तः ! आरूढ एष हस्तिनम् । सज्जो भव ।
२. हस्तिपकः सखड्गभीषणं ... ... .... (?) सिंहनादं वनकच्छतो निर्गतं शत्रुबलं परीक्षितं च अस्माकं योधैः ।

(निष्क्रान्तः)

चेटः— [1]अय्य ! भीददाए सुट्ठु अहं वाउळो को एसो देसो ?

चोरः—अरे ! नन्वयं यमुनाकच्छः ।

चेटः—[2]अय्य ! इदाणिं खु मए अभिण्णादम् ।

(उभौ परिक्रामतः)

चोरः—(आकर्ण्य) अये ! अरण्ये महदाक्रुष्टम् । श्रुतं मया ह्यद्य शालंकायनः प्रविष्टवानिति । न खलु किंचिद्वत्सराजस्तेन छलितः स्यात् ।

चेटः— (परिक्रम्य अवलोक्य सभयम्) [3] अय्य ! इदो इदो विलोहेहि । केसाकेसी संपहारो संवुत्तो ।

चोरः—हन्त ! तदेवात्र संवृत्तम् । वात्सिका आवन्तिकाश्च खल्वमी योधाः । एते हि—

समुन्नदन्तो धृतचापशूल-
प्रासासिशक्तिक्षुरिकागदाद्यैः ।
परस्परं घ्नन्ति रुषा प्रवीरा
द्विधा विभक्ता इव मृत्युदंष्ट्राः ॥ २१ ॥

चेटः— [4]अय्य ! एदस्स सल्लरुक्खस्स समीवे चिट्ठिअ सुहं णं पेक्खिस्सामो ।

चोरः—अरे ! सम्यगुपलक्षितं भवता । (उभौ परिक्रम्य तिष्ठतः)

---

१. आर्य ! भीततया सुष्ठु अहं व्याकुलः । क एष प्रदेशः ?
२. आर्य ! इदानीं खलु मया अभिज्ञातम् ।
३. आर्य ! इत इतो विलोकय । केशाकेशि संप्रहारः संवृत्तः ।
४. आर्य ! एतस्य सालवृक्षस्य समीपे स्थित्वा सुखं ननु प्रेक्षिष्यावहे ।

चेटः— [1]अय्य ! को णु खु एसो पदुमवणं विअ जोहाणं मुहवणं छिंदंतो तुरअचक्कं विअ जुद्धमंझे परिब्भमदि ?

चोरः—अये ! नन्वेष वत्सराजः । अयं हि—

हुतहुतवहतेजाः कुञ्चितभ्रूपताकः
प्रचुररुधिरलिप्तः प्रोद्यतप्रांशुखड्गः ।
विचरति गतशङ्कः शत्रुसंघान् विनिघ्नन्
तुरगगतिविशेषात् सर्वतो दृश्यमानः ॥ २२ ॥

चेटः— [2]अय्य ! एसो खु सबरराओ "अरे कच्चाअणा ! पुत्तं मे साणुगं एसि कहिं गच्छसि" त्ति भणिअ भट्टिणो समीवं एव्व धावइ ।

चोरः—अरे ! पश्य पश्य—

परिघूर्ण्य भुजेन रोषदीप्तो
नृपतिः काञ्चनतालसन्निभेन ।
अवधीदुरसि प्रदीप्तशक्त्या
द्विषमेषो न्यपतत्क्षितौ गतासुः ॥ २३ ॥

---

१. आर्य ! को नु खल्वेषः पद्मवनमिव योधानां मुखवनं छिन्दन् तुरगचक्रमिव युद्धमध्ये परिभ्रमति ?

२. आर्य ! एष खलु शबरराजः "अरे कात्यायन! पुत्रं मे सानुगम् एष्यसि कुत्र गच्छसि" इति भणित्वा भर्तुः समीपमेव धावति ।

चेटः— [1]अय्य ! मज्जिदा विअ भूमी भट्टिणा णिहदेहिं सबरबळेहिं दुद्दिणं विअ वणगहणम् ।

चोरः—सम्यगाह भवान् ।

यथा यथा हरिरिव माहिषं गणं
नराधिपः समभिनिहन्ति निर्दयम् ।
तथा तथा शबरबलं समन्ततो
निशामुखे तिमिरमिवाभिवर्धते ॥ २४ ॥



चेटः— [2]ह द्धि ! हदा सव्वे भट्टिणो जोहा ।

चोरः—अरे ! गता स्वामिपिण्डानृण्यमिति ब्रूहि ।

चेटः— [3]कोसुम्भरणकञ्चुओ हिउडिभग्गभीसणो तव्वणअणो आअण्ण-पुण्णचाओ को एसो ?

चोरः—अयं ननु शालङ्कायनः । एष खलु राजानं सस्मितं बाणैरलंकुर्वाणः—

शरेण तीक्ष्णायसतेजनेन
पादोरुदेशे न्यवधीन्नरेन्द्रम् ।

चेटः— [4]ह द्धि !

चोरः—प्रासेन राज्ञा निहतोऽसमूले
व्यपेतसंज्ञो न्यपतद्धरायाम् ॥ २५ ॥

---

१. आर्य ! मार्जिता इव भूमिः भर्त्रा निहतैः शबरबलैः दुर्दिनमिव वनगहनम् ।
२. हा धिक् ! हताः सर्वे भर्तुर्योधाः ।
३. कौसुम्भरणकञ्चुकः भ्रुकुटीभङ्गभीषणः तप्तनयनः आकर्णपूर्णचापः क एषः ?
४. हा धिक् ।

चेटः— [1]अय्य ! को णु खु एसो पदुमवणं विअ जोहाणं मुहवणं छिंदंतो तुरअचक्कं विअ जुद्धमंझे परिब्भमदि ?

चोरः—अये ! नन्वेष वत्सराजः । अयं हि—

हुतहुतवहतेजाः कुञ्चितभ्रूपताकः
प्रचुररुधिरलिप्तः प्रोद्यतप्रांशुखड्गः ।
विचरति गतशङ्कः शत्रुसंघान् विनिघ्नन्
तुरगगतिविशेषात् सर्वतो दृश्यमानः ॥ २२ ॥

चेटः—[2]अय्य ! एसो खु सबरराओ "अरे कच्चाअणा ! पुत्तं मे साणुगं एसिअ कहिं गच्छसि" त्ति भणिअ भट्टिणो समीवं एव्व धावइ ।

चोरः—अरे ! पश्य पश्य—

परिघूर्ण्य भुजेन रोषदीप्तो
नृपतिः काञ्चनतालसन्निभेन ।
अवधीदुरसि प्रदीप्तशक्त्या
द्विषमेषो न्यपतत्क्षितौ गतासुः ॥ २३ ॥

---

१. आर्य ! को नु खल्वेषः पद्मवनमिव योधानां मुखवनं छिन्दन् तुरगचक्रमिव युद्धमध्ये परिभ्रमति ?

२. आर्य ! एष खलु शबरराजः "अरे कात्यायन! पुत्रं मे सानुगम् एष्यित्वा कुत्र गच्छसि" इति भणित्वा भर्तुः समीपमेव धावति ।

चेटः— [1]अय्य ! मज्जिदा विअ भूमी भट्टिणा णिहदेहिं सबरबलेहिं दुद्दिणं विअ वणगहणम् ।

चोरः—सम्यगाह भवान् ।

यथा यथा हरिरिव माहिषं गणं
नराधिपः समभिनिहन्ति निर्दयम् ।
तथा तथा शबरबलं समन्ततो
निशामुखे तिमिरमिवाभिवर्धते ॥ २४ ॥



चेटः— [2]ह द्धि ! हदा सव्वे भट्टिणो जोहा ।

चोरः—अरे ! गता स्वामिपिण्डानृण्यमिति ब्रूहि ।

चेटः— [3]कोसुम्भरणकच्चुओ हिउडिभग्गभीसणो तम्बणअणो आअण्णपुण्णचाओ को एसो ?

चोरः—अयं ननु शालङ्कायनः । एष खलु राजानं सस्मितं बाणैरलंकुर्वाणः—

शरेण तीक्ष्णायसतेजनेन
पादोरुदेशे न्यवधीन्नरेन्द्रम् ।

चेटः— [4]ह द्धि !

चोरः—प्रासेन राज्ञा निहतोऽसमूले
व्यपेतसंज्ञो न्यपतद्धरायाम् ॥ २५ ॥

---

१. आर्य ! मार्जिता इव भूमिः भर्त्रा निहतैः शबरबलैः दुर्दिनमिव वनगहनम् ।
२. हा धिक् ! हताः सर्वे भर्तुर्योधाः ।
३. कौसुम्भरणकञ्चुकः भ्रुकुटीभङ्गभीषणः तप्तनयनः आकर्णपूर्णचापः क एषः ?
४. हा धिक् ।

चेटः—[1] अविहा ! एदेण अजं णळगिरिप्पडिमेण हत्थिणा सरमअं विअ भट्टारं करअन्तो अहिपददि हत्थिजोहो ।

चोरः—अहो, बलौदार्यं राज्ञः !

उद्वीक्ष्यैनं रौद्रमभ्यापतन्तं
राजा प्रासं क्षिप्तवानुग्रतेजाः ।
भिन्नात्मासौ विग्रहे तेन नागः
त्रासाद्रौति प्रावृषीवाभ्रराशिः ॥ ॥ २६ ॥

चेटः—[2] ह द्धि ! गआरोहएण हिअअप्पदेसे तोमरेण हदो भट्टिणो तुरओ ।

चोरः—अरे ! पश्य पश्य ; एष खलु राजा त्वरिततरं मञ्चादवरुह्य हरिणप्लुतके-नोत्प्लुत्य कैशिकामार्गेण प्रहारेण—

निकृत्तवान् द्विरदपतेर्महाभुजं
महासिना सदशनमश्मकर्कशम् ।
पतन्नसौ व्यपगतजीवितोऽवधीत्
स्वशस्त्रिणः स्वयमचलाभविग्रहः ॥ २७ ॥

चेटः—[3] अय्य ! अत्थग्गदो भअवो सुय्यो । धूमाअदि खु सव्वं वणगहणम्

चोरः—सम्यगुक्तं शेखरकेण ।

कृत्वा सुखेन गणनीयमरातिसैन्यं
भूमिं कळेबरशतैरतिदुर्गमां च ।

---

१. अपिहा ! एतेन अयं नलगिरिप्रतिमेन हस्तिना शरमयामिव भर्तारं कुर्व-अभिपतति हस्तियोधः ।

२. हा धिक् ! गजारोहकेन हृदयप्रदेशे तोमरेण हतो भर्तुस्तुरगः ।

३. आर्य ! अस्तंगतो भगवान् सूर्यः । धूमायते खलु सर्वं वनगहनम् ।

न्यस्यैव गङ्गामवतीर्य सन्ध्यां
रणाजिरेऽस्मिन् क्षतजाभिताम्रे ।
परं स्वतेजश्च नरेन्द्रसिंहे
निमग्नवानम्बुनिधौ विवस्वान् ॥ २८ ॥

चेटः—[1] अथ ! भट्टिणो भीददाए तहिं तहिं रुक्खावुदसरीरा ठिदा संभु (सवर ?) वारा ।

चोरः—एष खलु राजा—

कृत्वा सुखेन गणनीयमरातिसैन्यं
भूमिं कळेवरशतैरतिदुर्गमां च ।
युद्धाङ्गणे चरति भूमिपतिः श्रमार्तः
गाढप्रहारपरिविह्वलयेव गत्या ॥ २९ ॥

चेटः— ह द्धि ! पडिदो भट्टा ।

चोरः—इदानीमस्तमितः सूर्यः ।

चेटः—[3] अय्य ! एसो खु भट्टा उज्झिदसज्जोपसुट्टो विअ सीहो भीदभीदं उवअदेहि अमित्तेहि बद्धो ।

---

१. आर्य ! भर्तुः भीततया तत्र तत्र वृक्षावृतशरीराः स्थिताः शबरवीराः ।
२. हा धिक् ! पतितो भर्ता ।
३. आर्य ! एष खलु भर्ता उज्झितत्त्वोपसृष्ट (?) इव सिंहो भीतभीतमुपगतैः अमित्रैः बद्धः ।

चोरः—कष्टं कष्टम् !

भूमिः कराग्रेण विवर्तिताद्य
श्वासेन भग्नो हिमवान् महाद्रिः ।
आसारवृष्टया शमितोऽग्निरौर्वो
विनिर्हतः कीटशतैरनन्तः ॥ ३० ॥

चेटः—[1]अय्य! एहि, इह ण ठादव्वं अह्मेहि ।

चोरः—तथास्तु । (परिक्रम्य) अहो खलु नु विधेर्दुरतिक्रमता ! एष हि—

अतुलबलपराक्रमप्रभावः
प्रथितयशाः समरव्रणार्द्रगात्रः ।
नरपतिररिभिर्निबध्य नीतो
बलिरिव भोगिपभोगपाशबद्धः ॥ ३१ ॥

(निष्क्रान्ता)

॥ इति द्वितीयोऽङ्कः ॥

---

१. आर्य ! एहि, इह न स्थातव्यमस्माभिः !

## ॥ तृतीयोऽङ्कः ॥

(ततः प्रविशति सचिन्तो यौगन्धरायणः)

**यौग**—(विष्णोर्नामानि पठन्)

विष्णुस्त्रिधामा भगवानुपेन्द्रो
नारायणश्चक्रधरो मुरारिः ।
दामोदरः शौरिरनन्तमूर्तिः
कृष्णोऽच्युतः कंसरिपुर्मुकुन्दः ॥ १ ॥

(परिक्रम्य) परेद्युः प्रभृत्यहं दुःस्वप्नं पश्यामि । नागवनं च प्रविष्टवान् स्वामी। किं नु खलु भवेत् ! (निश्वस्य) अहो नु खलु स्नेहबलदुर्बलस्य मनसो नित्यातुरता ! कुतः—

तस्यापरैरपरिधृष्यबलप्रभाव-
श्रीवीर्यशौर्यधृतितामभिजानतोऽपि ।
तत्तद्विकल्प्य हृदयं परिवेपते मे
प्रेम्णा सहैव सततं भ्रमतीव दुःखम् ॥ २ ॥

(परिक्रम्य तिष्ठति)

**प्रतीहारी**—(प्रविश्य) [1]कहिं णु हु अय्यजोअंधराअणो ? (विलोक्य) एसो चन्दणमंडपे ठिदो । जाव उवसप्पामि । (उपेत्य) जेदु अय्यो ! अय्य ! उज्जयिणीदो को वि पत्तहत्थो आअदो ।

---

१. कुत्र नु खलु आर्ययौगन्धरायणः ? एष चन्दनमण्डपे स्थितः । यावदुपसर्पामि । जयत्वार्यः ! आर्य ! उज्जयिनीतः कोऽपि पत्रहस्त आगतः ।

**यौग**—भवति ! प्रवेशयैनम् ।

**प्रती**—[1]जं अय्यो आणवेदि (निष्क्रम्य चारेण सह प्रविश्य) एसो अय्यो, उवसप्पदु । (निष्क्रान्ता)

**चारः**—(उपसृत्य) [2]जेदु अय्यो !

**यौग**—स्वागतम् । भद्र ! का वार्ता तत्र ?

**चारः**—[3]एसो खु संकिचाअणीए (सालंकाअणीओ ?) ळेहो ।

**यौग**—आनय (गृहीत्वानुवाच्य) भद्र ! कदा शालङ्कायनः सनीलगजो निर्गतः

**चारः**—[4]अज्ज दसमो दिअसो ।

**यौग**—किमर्थं पुनस्त्वया विळम्बितम् ?

**चारः**—[5]सव्वे कोसंबीमग्गा बंधाविदा । तेण अहं विळंबिअं आअदो ।

**यौग**—(आत्मगतम्) अनाथाः कृता वयं प्रद्योतेन, अथवा स्वामी ।

अतीव दीर्घायुरतीव शूरः
  शस्त्रैरवध्यो मतिमान् कृतास्त्रः ।
श्रियः परं धाम च सार्वभौमः
  स्वस्थं विजित्यैष्यति शत्रुसङ्घान् ॥ ३ ॥

(प्रकाशम्) भद्र ! विश्रम्यताम् ।

---

१. यदार्य आज्ञापयति । एष आर्यः, उपसर्पतु ।
२. जयत्वार्यः !
३. एष खलु शालङ्कायनीयो लेखः ।
४. अद्य दशमो दिवसः ।
५. सर्वः कौशाम्बीमार्गो बन्धितः । तेनाहं विलम्बितमागतः ।

चारः—[1]जं अय्यो आणवेदि । (निष्क्रान्तः)

यौग—अतिक्रान्त इव कालः । किं नु खलु कर्तव्यमिदानीम् ? अथवा ससंशयत्वाद्दातव्य एव लेखः । स्वस्तिके !

प्रतीहारी—(प्रविश्य)[2]अय्य ! इअं ह्मि ।

यौग—शीघ्रं लेखावासात् लेखनीयं पत्रं चानय ।

प्रती—[3]जं अय्यो आणवेदि । (निष्क्रान्ता)

यौग—(निश्वस्य)

अपि नाम भवेन्नृपस्य शान्ति-
निरतस्य ग्रहणे वनद्विपानाम् ।
अपि नाम न लक्षतां च यामः
स्फुटाधिग्वादशरस्य पण्डितानाम् ॥ ४ ॥

प्रतीहारी—(प्रविश्य)[4]आणीदं मए जहाणत्तं सव्वम् ।

यौग—भद्रे ! आनय ।

प्रती—[5]अय्य ! इदं । (दत्वा निष्क्रान्ता)

यौग—किं नु खलु हस्तान्मे लेखनी पतिता (विचार्य) भवत्वहमेव तत्र यास्यामि ।

---

१. यदार्य आज्ञापयति ।
२. आर्य ! इयमस्मि ।
३. यदार्य आज्ञापयति ।
४. आनीतं मया यथाज्ञप्तं सर्वम् ।
५. आर्य ! इदम् ।

**प्रतीहारी**— [1](प्रविश्य) जेदु अय्यो ! उपाअमस (उपासअमढ?) समीवादो किळबन्धो एअदो ।

**यौग**—(आत्मगतम्) बन्धक इति । एतदप्यनिमित्तमेव । (प्रकाशं) अहमेवैनं प्रत्युद्गमिष्यामि ।

(उभौ परिक्रामतः)

**यौग**—(निश्वस्यात्मगतम्) निराशमिव मे मनः स्वामिनं प्रति । अथवा अनियतं हि निमित्तं नाम ।

**प्रती**—[2]अय्य ! एसो खु सो । (निष्क्रान्ता)

**यौग**—(विलोक्य) अये ! दृष्टपूर्व इव ।

(प्रविश्य पाशुपतवेषो हंसकः)

[3]जेदु भवम् !

**यौग**—अये ! हंसको दिष्ट्या वेषान्तरेणायमागतः ।

**यौग**—अये ! हंसको दिष्ट्या वेषान्तरेणायमागतः ; कार्यविशेषो विद्यत इति नूनम् । (प्रकाशम्) किमस्ति प्राणधारणोपायः ?

**हंस**—[4](आत्मगतम्) विदिदो ह्मि । (प्रकाशम्) धीरो खु अय्यो !

---

१. जयत्वार्यः ! उपासकमठ(?)समीपात् किल बन्धक आगतः ।

२. आर्य ! एष खलु सः ।

३. जयतु भवान् !

४. विदितोऽस्मि । धीरः खल्वार्यः !

**यौग**—अल्पैरक्षरैरनल्पमुक्तम् ।

**हंस**— [1]अय्य !

**यौग**—तिष्ठ तावत् । बहूपह्वरमिदं स्थानम् । कर्णे कथय ।

**हंस**— [2]अय्य ! तह । (कर्णे) एव्वं विअ ।

**यौग**—हा स्वामिन् ! (इति मोहमुपगतः)

**हंस**—(उदकेन मुखमवसिच्य) [3]समस्ससदु समस्ससदु अज्जो ।

**यौग**—(प्रत्यागत्य) हा देव ! (इति पुनर्मोहमुपगतः)

**हंस**— [4]समस्ससदु समस्ससदु अय्यो ।

**यौग**—(प्रत्यागत्य)

> धिङ्मन्त्रिणो धिक्प्रभुशक्तिमत्त्वं
> धिङ्नीतिशास्त्रं धिगुपायचिन्ताम् ।
> न विद्यते किञ्चन जीवलोके
> प्रत्यर्थिभूतं भवितव्यतायाः ॥ ५ ॥

**हंस**— [5]सुणाहि सव्वम् ।

**यौग**—(उत्थाय) कथयतु भवान् कथयतु । अथवा आगच्छ चन्दनमण्डपे विश्वस्तः तत्रैव निःशङ्कं श्रोष्यामः ।

---

१. आर्य !
२. आर्य ! तथा । एवमिव ।
३. समाश्वासयतु समाश्वासयत्वार्यः ।
४. समाश्वासयतु समाश्वासयत्वार्यः ।
५. शृणु सर्वम् ।

(उभौ परिक्रामतः)

यौग—भो ! मया मोहमुपगतेन न खलु मन्त्रस्नावि वचनमुक्तम् ?

हंस—[१]णत्थि किंचित् ।

यौग—दिष्टया !

हंस—[२]अय्य ! पविट्ठं चन्दणमण्डवम् ।

यौग—

अस्त्रेणेन्द्रजिता प्रसह्य समरे यद्रामरामानुजौ
बद्धावित्यवदन्महर्षिवृषभो वाल्मीकिराद्यः कविः ।
बन्धात्प्रत्यायितं तदद्य नृपतेः पूर्णस्य सर्वैर्गुणै-
र्दैवं मुख्यतमं नयादि सकलं खेदावहं केवलम् ॥ ६ ॥

(उपविश्य) भो हंसक ! गाढप्रहारप्रवृद्धमूर्च्छाप्रवासितस्मृतिः स्वामी बद्ध इति शङ्के ।

हंस—[३]अय्य ! अण्णहा कहं भविस्सदि ? मए उण मत्थअळद्धखग्गप्पहारेण चिरेण सुण्णं उवळंभिअ बंधिअ णीअमाणो दिट्ठो ।

यौग—बद्धा (व) नीयमानो दृष्टः ! भोः !

मयि जीवति नाम वत्सराजो
गतपा (गजपा) वारणराजदीर्घबाहुः ।

---

१. नास्ति किञ्चित् ।
२. आर्य ! प्रविष्टं चन्दनमण्डपम् ।
३. आर्य ! अन्यथा कथं भविष्यति । मया पुनः मस्तकलब्धखड्गप्रहारेण चिरेण शून्यमुपलभ्य बद्धा (व) नीयमानो दृष्टः ।

वशतामविशद्द्विषां जनानां
किमतः कष्टतरं नु नाम लोके ॥ ७ ॥

**हंस**—[१] तदो तहिं एव्व पाणं परिच्चत्तुं ववसिदो वि अय्यस्स इमं वुत्तन्तं भणिअ मरिस्सं त्ति आअदो ह्मि ।

**यौग**—अतीव कर्तव्यमनुष्ठितं भवता । कुतः ?

आदौ यथा प्रवृत्तं
कार्यं लोकैरसंविदितमेव ।
शक्यं यथानुरूपं
प्रतिपत्तुं वञ्चयित्वान्यान् ॥ ८ ॥

**हंस**—[२] अदो एव्व मए वेसपरिवट्टो किदो ।

**यौग**—साधु कृतम् ! अपि जानीषे क नु खलु वर्तते स्वामी ?

**हंस**—[३] उज्जयिणीं एव्व णीदो त्ति तक्केमि ।

**यौग**—कथमिव ?

**हंस**—[४] सुदं मए साळङ्काअणवअणं सवअणं (सावहाणं ?) "सूरा णीदीमंतो वच्चराअस्स सइवा ; ता सिग्घं उज्जइणी एव्व गंतव्वा" त्ति ।

---

१. ततः तत्रैव प्राणान् परित्यक्तुं व्यवसितोऽपि आर्यस्येमं वृत्तान्तं भणित्वा मरिष्यामीति आगतोऽस्मि ।
२. अत एव मया वेषपरिवर्तः कृतः ।
३. उज्जयनीमेव नीत इति तर्कयामि ।
४. श्रुतं मया सालङ्कायनवचनम् (सावधानं ?) "शूरा नीतिमन्तो वत्सराजस्य सचिवाः । तच्छीघ्रम् उज्जयिन्येव गन्तव्या" इति ।

6

यौग—हा कष्टम् !

शूरा वयं किल वयं किल नीतिमन्तो
याता: सपत्नवशतामवशः पतिर्नः ।
तस्यैव वा वचनमस्तु तथैव पुंसां
शौर्यं नयश्च महति व्यसने प्रथेते ॥ ९ ॥

हंस—[1] अय्य ! तारिसं परिभवं अणुभविअ मिस्सदि ण खु भट्टा ?

यौग—मा मैवम्, पश्य—

अन्तर्निगूढामर्षाणां तेजःसत्त्वक्षमावताम् ।
नास्त्यसह्यतरं दुःखं महतां धैर्यशालिनाम् ॥ १० ॥

हंस—[2] उज्जइणीं गदस्स भट्टिणो ण हु किंचि अणिट्ठं भवे ?

यौग—तत्रापि नास्त्यपायः ।

हंस—[3] कहं विअ ?

यौग—अस्मत्स्वभावानभिज्ञतया स्वामिनं प्रत्यपायेऽसति रुमण्वतो मम वा प्रद्योतं विना नास्त्यन्या गतिरित्याशङ्कमानः तत्रभवान् भरतरोहकः सर्वप्रकारेण स्वामिनं परिपालयिष्यति ।

हंस—[4] एवं होदु ।

---

१. आर्य ! तादृशं परिभवमनुभूय मृष्यति न खलु भर्ता ?
२. उज्जयनीं गतस्य भर्तुर्न खलु किञ्चिदनिष्टं भवेत् ?
३. कथमिव ?
४. एवं भवतु ।

यौग—(विचिन्त्य) हंसक ! त्वमिदानीं नगरान्निष्क्रम्य स्वेनैव वेषेण हतो राजेति प्रकाशयन्नागत्य निवेदय ।

हंस—[1]अय्य ! तह । (निष्क्रान्तः)

यौग—(पत्रं लेखनीं च आदाय सचिन्तम्) रुमण्वता राज्ञा चेमान्यक्षराणि प्रबुध्यन्ते नान्यैः, अतो लेखविसंवादे सत्यपि नास्ति मन्त्रभेदः । (लिखित्वा संवेष्ट्य) कोऽत्र भोः ?

पुरुषः—(प्रविश्य) [2]जेदु जय्यो ! अहं दओ (करभओ ?) ।

यौग—अद्य खल्विहागमिष्यति रुमण्वानिति श्रूयते । शीघ्रमेव लेखं तस्मै प्रापय ।

पुरु—[3]अय्य ! तह । (गृहीत्वा निष्क्रान्तः)

यौग—लिखितं च यथा कर्तव्यं रुमण्वतः । सुष्ठु खल्वहं चक्षुर्मोहिनीं विद्यां जानामि । अतः—

विमोह्य नेत्राणि तया जनानां
प्रविष्टवद्दारुचितां प्रदीप्ताम् ।
गत्वा पुरीमुज्जयिनीं पतिं मे
विमोचयिष्यामि नयेन शत्रोः ॥ ११ ॥

कष्टं नाम । किं नाम मे मुखान्निर्गतम् । कोऽहम् ? कः स्वामी ?

सिंहा यथा परपराक्रमसाधितानि
खादन्ति नैव पिशितानि बुभुक्षयार्ताः ।

---

१. आर्य ! तथा ।
२. जयत्वार्यः ! अहम्— (करभकः ?)
३. आर्य ! तथा

दुःखे महत्यपि तथैव परेण लब्धान्
वाञ्छन्त्यसूनपि न मानधना महान्तः ॥ १२ ॥

अतः प्रद्योतं वञ्चयित्वा स्वामिनो यथाभीष्टकारी भविष्यामि ।

**यतीहारी**—(प्रविश्य) [1] जेदु अय्यो ! भट्टिणो उपज्झाओ हंसओ रुदंतेहिं जणेहिं परिवुदो दुवारे चिट्ठिदि ।

**यौग**—किं किं तन्ना(तेना ?)गतम् । अहमेवैनं प्रत्युद्गमिष्यामि ।

(उत्थाय परिक्रामतः)

**प्रती**—[2] अय्य ! आअदं ह्म चोणीरगोरअं (?) ।

**यौग**—भवति ! त्वमिदानीमभ्यन्तरं प्रविश ।

**प्रती**—[3] अय्य ! तह (निष्क्रान्ता) ।

(ततः प्रविशति साश्रुर्हंसकः नगराध्यक्षश्च)

**हंस**—[4] अय्य ! हदो दे भट्टा पज्जोदस्स बलेहिं णीळणाअव्ववदेसेण (इति पादयोः पतति) ।

**यौग**—हा स्वामिन् ! हा सखे ! (मोहमुपगत इव)

**अध्यक्षः**—समाश्वासयतु ।

**यौग**—(प्रत्यागत्येव) धिगद्याप्यहं जीवामि । अस्थाने मामपास्य गतो भर्ता ।

---

१. जयत्वार्यः ! भर्तुरुपाध्यायो हंसको रुदद्भिर्जनैः परिवृतो द्वारे तिष्ठति ।
२. आर्य ! आगताः स्मः चतुर्द्वारगोचरम् (?)
३. आर्य ! तथा ।
४. आर्य ! हतस्ते भर्ता प्रद्योतस्य बलैः नीलनागव्यपदेशेन ।

विहाय मां यद्यपि देव यातो
दिङ्नागजेन्द्रग्रहणाय नाकम् ।
अथाप्यहं त्वामनुयाम्यवश्यं
चितां प्रविश्याग्निविधूतपाप्मा ॥ १२ ॥

अध्यक्षः—इदानीं खलु वयं विनष्टाः ।

यौग—भो हरिवर्मन् !

अध्यक्षः—आज्ञापय ।

यौग—गच्छ त्वं शीघ्रं यमुनातीरे चितां कारय ।

अध्यक्षः—प्रसीदत्वार्यः । नार्हति भवानस्मान् विनाथीकर्तुम् ।

यौग—अनिश्चितमपि मया प्रोक्तपूर्वम् ?

अध्यक्षः—हन्त ! त्यक्ता एव वयम् । (रुदन्निष्क्रान्तः)

हंस—[1] अय्य ! किं एदं ?

यौग—उज्जयिनीमहं यास्यामि ।

हंस—[2] जइ अय्यो गओ णिस्संसअं रुमण्णो वि तहिं आगमिस्सदि ।

यौग—ततः किम् ?

हंस—[3] पविठ्ठो भवे एत्थ पंचालो ।

यौग—पिङ्गळादयस्तं निवारयिष्यन्ति ।

हंस—[4] जुद्धं णाम अणिअभजअत्तेविणं रक्खिदव्वा (?) ।

---

१. आर्य किमेतत् ?
२. यद्यार्यो गतः निस्संशयं रुमण्वानपि तदा अगमिष्यति ।
३. प्रविष्टो भवेदत्र पाञ्चालः ।
४. युद्धं नाम अनियतभद्रम् ; आत्मापि नूनं रक्षितव्यः (?)

यौग—समानवंश्या ननु राज्ञो रिपवः ।

हंस—[1] मए उण किं कादव्वं ?

यौग—यद्रुमण्वता प्रोक्तम् ।

ब्राह्मणः—(प्रविश्य) स्वस्ति भवते ! सर्वाः प्रकृतयस्तत्रागमनमिच्छन्ति ।

यौग—किं स्वामिनः समीपे ?

ब्राह्म—न हि । राजभवने ।

यौग—निवृत्त इदानीं राजभवनव्यापारः ।

ब्राह्म—तथापि ननु सन्ति तस्य त्रयो भ्रातरः ।

यौग—किं तैः ?

ब्राह्म—तेषामेकं राज्येऽभिषिच्य प्रद्योतवैरनिष्क्रयः कर्तव्यः । न चिता प्रवेष्टव्येति प्रकृतिजनानां सन्देशः ।

यौग—नान्यत् ।

ब्राह्म—दुःखं ननु चिताप्रवेशः ।

यौग—तस्मादपि दुःखतरं स्वामिनो वियोगः ।

ब्राह्म—रक्षितव्या ननु प्राणाः ।

यौग—ततोऽपि प्रतिज्ञा ।

ब्राह्म—वन्ध्यो ननु निष्कारणजीवितत्यागः ।

यौग—भर्तृदर्शनहेतुत्वादवन्ध्यः ।

ब्राह्म—अनियतं हि तत् ।

यौग—अनिश्चितानामेतत् ।

---

१. मया पुनः किं कर्तव्यम् ?

**ब्राह्म**—सन्दिग्धा ननु परलोकाः ।

**यौग**—निस्सन्दिग्धा मम ।

**ब्राह्म**—न शक्ष्याम्यहमतः परं वक्तुम् ।

**हंस**—[१] अळं, गच्छदु अय्यो । ण सक्कं परिस्समेण अण्णहा कादुम ।

**ब्राह्म**—भोः ! तथा (निष्क्रान्तः) ।

**नगराध्यक्षः**—(प्रविश्य) आर्य ! कृतं यथाज्ञप्तम् ।

**यौग**—अहो ! प्रियं कृतम् ।

(उत्थाय सर्वे परिक्रामन्ति)

**हंस**—[२] अहो ! भट्टिणो उवरि अणुराओ पकिडिजणाणं, णत्थि मुह (हं) अवंफदुट्ठिणं ।

**यौग**—सम्यगाह भवान् । इयं हि—

सचिवद्विजपौरयोषितां
वदनैः सन्ततबाष्पवर्षिभिः ।
नळिनीव विराजते पुरी
प्रचुरासारजलार्द्रपङ्कजा ॥ १४ ॥

**अध्यक्षः**—आर्यस्य चिताप्रवेशश्रवणेन द्विगुणीकृतः प्रकृतिजनानां सन्तापः

**हंस**—[३] णिग्गदो भवणादो ।

**यौग**—भो हरिवर्मन् ! यावद्रुमण्वानागच्छति तावदस्यां नगर्यां अप्रमादेन भवितव्यम् ।

---

१. अलं, गच्छत्वार्यः । न शक्यं परिश्रमेण अन्यथा कर्तुम् ।
२. अहो ! भर्तुरुपरि अनुरागः प्रकृतिजनानाम् , नास्ति मुखम् अबाष्पदुर्दिनम् ।
३. निर्गतो भवनतः ।

अध्य—अथ किम्।

हंस—(एकतो विलोक्य)[1]अहो ! णअरं विअ जमुणादीरं संव्वुत्तं ।

यौग—साधु बहुजनप्रत्यक्षं नाम विचारणीयं भवति ।

हंस—[2]इदो चिदा ।

यौग—(विलोक्य) एषा हि—

विकसत्प्रचुरोल्लसत्स्फुलिङ्गा
पवनालोलशिखासहस्रकीर्णा ।

मदुपागमनं नृपाय वक्तुं
त्रिदिवं प्रेषयतीव धूम एति ॥ १५ ॥

(परिक्रम्य) हंसक ! गच्छ त्वमिदानीम् । यौगन्धरायणो गतः स्वामि-समीपमिति रुमण्वन्तं ब्रूहि ।

हंस—[3]अय्य ! तह (पादयोर्निपत्य साश्रुमुखो निष्क्रान्तः) ।

यौग—पुष्पं पुष्पम् ।

(प्रविश्य चाङ्गरिकाहस्तः)

चेटः—अय्य ! इदं पुष्पम् ।

यौग—(प्रगृह्य तामर्चयति)

---

१. अहो ! नगरमिव यमुनातीरं संवृत्तम् ।
२. इतश्चिता ।
३. आर्य तथा ।

चेटः—[1] सुणिस्समहं भट्टिणो मरणं ; पेक्खिदुं ण पारेमि । (रुदन्निष्क्रान्तः)

यौग—(आत्मगतम्) बद्धमिदानीं विद्यया जनानां चक्षुः । (प्रकाशम्) भोः ! सर्वान् पौरान् विज्ञापयामि । यत्किञ्चिन्मे स्खलितं तन्मर्षणीयं भवद्भिः । (चितां प्रदक्षिणीकृत्य) एष भोश्चितां प्रविशामि । (उल्लङ्घ्य परिक्रामति) (नैपथ्ये हाहाकारः क्रियते)

यौग—दिष्ट्या जनाः सर्वे वञ्चिताः । तथा हि—

केचिद्भूमितले पतन्ति विचरन्त्येके सहाहारवाः
केचिन्मुक्तशिखा रुदन्ति विलपन्त्युद्बाहवः केचन ।
केचिद्ग्रावणि पातयन्ति च शिरः सर्पन्ति केचित्क्षितौ
केचिद् घ्नन्ति करैरुरो मुहुरयं सिद्धप्रयोगो मम ॥ १६ ॥

अतः खल्वहम्—

उन्मत्तवेषः सुखमुज्जयिन्यां
भ्रान्त्वा यथाहं प्रतिपद्य कार्यम् ।
इहागमिष्यामि सहैव भर्त्रा
विकासयन् पौरजनाननानि ॥ १७ ॥

संप्रति हि—

उपागतं वमदिव दिङ्मुखैस्तमो
निशामुखं परभृतकर्णमेचकम् ।
परिक्षरत्तिमिरपरीतमम्बरं
शनैः शनैरवतरतीव मेदिनीम् ॥ १८ ॥

(निष्क्रान्तः)

॥ इति तृतीयोऽङ्कः ॥

---

१. श्रोष्याम्यहं भर्तुर्मरणम् ; प्रेक्षितुं न पारयामि ।

7

## ॥ चतुर्थोऽङ्कः ॥

( ततः प्रविशति डिण्डिकवेषो हंसकः )

हंस—ससमुद्दळे सळरुक्खससुळासुणसिद्धणाअं धव्वधम्माधादेहाणं एक्केण विणा सएळोअं । (विचिन्त्य) अज्ज खु मए पअळाउज्जइणी परिब्भमिदा । मुहुत्तअं इमं सीसुदेपउळे विस्समिस्सम् । (परिक्रम्य) इदं मे ..... ।*

———

* एतावानेव भागः आदर्शे उपलभ्यते ।

PRINTED AT THE MADRAS LAW JOURNAL PRESS, MYLAPORE, MADRAS.

# ALPHABETICAL INDEX OF VERSES.


अतीव दीर्घायुः 36
अतुलबल- 34
अनिर्जितात्मा 8
अन्तर्निगूढामर्षाणां 42
अपि नाम भवेत् 37
अभेद्यया स्वाम्यनु- 27
अस्त्रेणेन्द्रजिता 40
अहमरिपृतनानां 28
आकृष्य द्विरदेन 10
आदौ यथा प्रवृत्तं 41
उद्वीक्ष्यैनं 32
उन्मत्तवेषः 49
उपलनिचयनीलं 17
उपागतं वमदिव 49
एभिर्गुणैः 6
कः क्षत्रियः 28
कुलबलमतिरूप- 7
कृत्वा सुखेन 33
केचिद् भूमितले 49
क्षीणव्याधित- 20
जयति गिरिसुता- 1
जालेन वह्निवत् 27
तरुगहनमिदं 23
तरुभिरिभकर- 16
तस्यापरैरपारे- 35
तामश्मकेश्वर- 2
तिष्ठ प्राग्जयधन्व 25
दृष्टो भवेद्यदि 20
धिङ्मन्त्रिणः 39
नयक्षमाधृति- 7
निकृत्तवान् 32
निरुपमबल- 24
नीता बलात् 9
नृपमौलितल- 2
नृपाः प्रभुत्वात् 21
न्यस्यैव गङ्गां 33
परिघूर्ण्य भुजेन 30
प्रद्योतं भज 27
प्रविलम्बभुजङ्ग- 5
बम्भ्रम्यमाण- 17
बाल्ये गजः 10
भवतु पुनरितः 25
भूमिः कराग्रेण 34
मम तावदिदं 12
मयि जीवति 40
यथाक्रमेण तत् 8
यथा यथा हरिरिव 31
यो विक्रान्तः 5

विकसत्प्रचुरोल्लसत्- 48
विचित्य वत्सेश्वर- 6
विन्यस्य सम्यक् 26
विमोह्य नेत्राणि 43
विवाहो जन्म 2
विष्णुस्त्रिधामा 35
विहाय मां यद्यपि 45
शक्तो ग्रहीतुं 19
शरेण तीक्ष्णायस- 31
शूरा वयं किल 42
सचिवद्विजपौर- 47
समसितनखरान्तः 23
समुन्नदन्तः 29
सापायाः प्रत्यन्ताः 19
सितरुचिरदुकूलः 4
सिंहो यथा 43
सौभाग्यश्री- 2
हुतहुतवहतेजाः 30


[*N. B.* The reference is to pages.]

———

# ERRATA

| Page | Line | For | Read. |
|---|---|---|---|
| 3 | 14 | अहदक्ररवो मणिवसणो | अहदक्खोमणिवसणो |
| ,, | 23 | स्वस्तिविविधानो | स्वस्तिविधानो |
| 9 | 23 | विश्लषेऽपि | विश्लेषेऽपि |
| 10 | 21 | बलात् ॥ | बलात ॥ १७ ॥ |
| ,, | 23 | fore | for |
| 12 | 2 | यतीहारी | प्रतीहारी |
| 14 | 9 | लेहृण | लेहेण |
| ,, | 19 | राक्षायै | रक्षायै |
| 15 | 6 | नितीय: | द्वितीय: |
| 16 | 13 | वनं मे ॥ | वनं मे ॥ १ ॥ |
| ,, | 20 | कृत | कृतं |
| 17 | 13 | भो | 1 भो |
| ,, | ,, | कणा | कण्णा |
| 11 | 14 | णआ | णाआ |
| 18 | 8 | अज्ज | 2 अज्ज |
| 20 | 5 | [ष्ट] | delete |
| 21 | 15 | । उत्तं | उत्तम्। |
| 28 | 7 | हत्थिवको | 2 हत्थिवको |
| 29 | 2 | अय्य | 1 अय्य |
| 30 | 17 | एष्यति | एष्य |
| 31 | 15 | हद्धि | 4 ह द्धि |
| 32 | 17-18 | delete | |
| 33 | 5 | अथ | अय्य |
| ,, | 12 | हद्धि | 3 ह द्धि |
| ,, | 14 | 4अय्य | 3 अय्य |
| ,, | 18 | उज्झितत्वोपसृष्ट | उज्झितसत्वोपसृष्ट |
| 34 | 12 | निष्क्रान्ता | निष्क्रान्तौ |
| 38 | 6 | स्यामिनं | स्वामिनं |
| ,, | 12 | delete | |
| 44 | 4 | यतीहारी | प्रतीहारी |
| 45 | 20 | अगमिष्यति | आगमिष्यति |

———

